श्रीः

भगवत्पाणिनिमुनिप्रणीतः

# अष्टाध्यायीसूत्रपाठः

वार्तिक-गणपाठ-धातुपाठ-लिङ्गानुशासन-
विमर्श-सूत्रसूचीसहितः


सङ्कलयिता सम्पादकश्च-

**डॉ० रमाशङ्कर मिश्रः**

आचार्य (नव्यव्याकरण, साहित्य, वेदान्त)

एम.ए. (संस्कृत) विद्यावारिधि (पी-एच.डी.), वाचस्पति (डी.लिट्.)

श्रीहरदेवदास नथमल वैरोलिया आदर्श संस्कृत
महाविद्यालय, टेढ़ीनीम, वाराणसी।



**मोतीलाल बनारसीदास**

दिल्ली, मुम्बई, चेन्नई, कलकत्ता, बंगलौर,
वाराणसी, पुणे, पटना

श्रीः

# प्रास्ताविकम्

परस्परतपःसम्पत्फलायितपरस्परौ ।
प्रपञ्चमातापितरौ प्राञ्चौ जायापती स्तुमः।।

विदन्त्येवेदं निखिलशास्त्रपारावारपारदृश्वानो महात्मानो विद्वांसो यद् वेदार्थप्रतिपादकेषु सुप्रथितेषु षट्सु वेदाङ्गेषु व्याकरणमेव प्राधान्यं भजते। तद्यथा–

**छन्दः पादौ तु वेदस्य हस्तौ कल्पोऽथ पठ्यते।**
**ज्योतिषामयनं चक्षुर्निरुक्तं श्रोत्रमुच्यते।।**
**शिक्षा घ्राणं तु वेदस्य मुखं व्याकरणं स्मृतम्।**
**तस्मात् साङ्गमधीत्यैव ब्रह्मलोके महीयते।।**

(पाणिनीय शिक्षा ४१-४२)

प्रधाने कृतो यत्नः फलवान् भवतीति धिया महर्षि-पाणिनिप्रणीत-स्याष्टाध्यायीसूत्रपाठस्य सङ्कलने सम्पादने चास्माकं प्रवृत्तिर्जाता।

महर्षेः पाणिनेः सूत्राणि अष्टभिरध्यायैर्गुम्फिततत्वाद् 'अष्टाध्यायी' नाम्ना व्यपदिश्यन्ते। अस्यामष्टाध्याय्यां लौकिकवैदिकोभयविधशब्दप्रक्रियाविलासो राजते। अत्र प्रत्यध्यायं चत्वारः पादाः अनुस्यूताः सन्ति। प्रथमेऽध्याये संज्ञानां परिभाषाणां च वर्णनं चकास्ति। विभक्त्यर्थाः समासाश्च द्वितीयेऽध्याये समुपनिबद्धाः सन्ति। तृतीयेऽध्याये धातुभ्यो विहिताः प्रत्ययाः संशोभन्ते। तद्धितप्रत्ययाः तुर्यपञ्चमाध्याययोः समुपवर्णिताः विद्यन्ते। प्रकृति-सम्बन्धिकार्यव्याजेन तिङ्सन्धिस्वरादीनां निरूपणं षष्ठेऽध्याये समवलोक्यते। अङ्गाधिकारस्थो विषयः सप्तमेऽध्याये संदृश्यते। प्रत्ययसम्बन्धीन्यशेषाणि कार्याण्यपि तत्रैव निरूपितानि। द्वित्वसम्बन्धि-विधानान्यष्टमाध्यायस्य प्रथमे चरणे स्थानानि दधते। अष्टमाध्यायस्यावशिष्टेषु द्वितीय-तृतीय-चतुर्थपादेषु द्वित्वस्वरसन्धिषत्वणत्वविधायकानि सूत्राणि समावेशितानीति ज्ञेयम्।

पाणिनीयशास्त्रस्य प्राचीनोऽध्यायप्रकारस्तु सूत्रपाठक्रमानुसार्येवाऽऽसी-दित्यत्र नास्ति संशीतिः। सूत्रपाठक्रममनुसृत्य व्याकरणाध्ययनं भवतिस्म-इत्यस्मिन् विषये काशिकातः पाचीना वृत्तिग्रन्थास्तद्व्याख्यानग्रन्थाश्च प्रमाणत्वेन वर्तन्ते। वैक्रमाब्दस्यैकादशशताब्द्यां यथाप्रक्रियं पाणिनीयसूत्राणि सङ्कलय्य पठनपाठनक्रमस्यारम्भः समजनि। कालक्रमेण क्रमोऽयमुत्तरोत्तरं विस्तरं पूर्णताञ्च संप्राप्तः।

याथातथ्येन सूत्रार्थसम्पादने महाभाष्याद्याकरग्रन्थेषु पुरातनप्रक्रियाग्रन्थेषु च पाणिन्यष्टकस्य सूत्रपौर्वापर्यक्रमनुसृत्यैव सर्वत्र समानरूपेण पतञ्जलि-प्रभृतिभिर्निर्वाहः कृतोऽवलोक्यते। तथापि प्रक्रियाग्रन्थेषु कार्यकालपक्षाग्रहेण सूत्राणि विभिन्नप्रकरणेषु विकीर्णानि संदृश्यन्ते। एतावता विभिन्नप्रकरणेषु पठितानां सूत्राणां पारस्परिकं ज्ञानं महता क्लेशेन संजायते। अष्टाध्याय्यां सर्वाणि प्रकरणानि वैज्ञानिकेन विधिना सुसम्बद्धानि विद्यन्ते। तेन हेतुना तत्तत्प्रकरणस्य ज्ञानं सुतरामनायासेन यथाक्रमं भवति। अपरञ्चाष्टाध्याय्यां 'विप्रतिषेधे परं कार्यम्' 'असिद्धवदत्राभात्' 'पूर्वत्रासिद्धम्' इत्याद्यधिकार-सूत्राणां प्रकरणेषु सूत्रक्रमज्ञानमन्तरा न कोऽप्यन्यः पन्था वर्तते। तत्र सूत्राणां क्रमिकत्वस्य ज्ञानमवश्यमपेक्षते। यतः सूत्राणां पौर्वापर्यज्ञानमन्तरा 'पूर्वम्' 'परम्' 'आभात्' 'त्रिपादी' 'सपादसप्ताध्यायी' 'बाध्यबाधकभावश्च'इत्यादि ज्ञानं न कथमपि सम्भवितुमर्हति।

एतन्निखिलं चेतसि विभाव्य छात्राणां जिज्ञासूनाञ्च हितसंसाधनदृशा प्रस्तुतोऽयमुपक्रमः। अस्मिन् संस्करणे यथास्थानं वार्तिक-गणपाठ-धातुपाठ-लिङ्गानुशासनप्रभृतयश्चैते विषयाः समुपन्यस्ताः सन्ति। कस्य सूत्रस्य पदस्य वा अनुवृत्तिः कुत्रपर्यन्तं गच्छतीति शङ्कानिरसनधिया 'विमर्श' इति शीर्षकेण मातृभाषायां यत्नः कृतोऽस्ति। आशासे अनेन विधिना व्याकरणाध्येतारश्छात्राः स्वल्पेनैव प्रयासेन स्वाभीष्टं लप्स्यन्ते। पुस्तकस्यास्य प्रणयनावसरे सत्परामर्शदानार्थं श्रीजनार्दनपाण्डेयमहोदयानां पादपङ्कजेषु प्रणतितति समर्पयामि। पाण्डुलिपिनिर्माणप्रसङ्गे साहाय्यदानार्थं समुत्तीर्णसाहित्याचार्यपरीक्षं

श्रीचन्द्रशेखरमिश्रं शुभाशिषा संयुनज्मि। प्रकाशनदायित्वमङ्गीकरणार्थं 'मोतीलाल बनारसीदास' इतिसंस्थानस्य सञ्चालकेभ्यः शततशः साधुवादान् वितरामि।

पुनश्च ग्रन्थेऽस्मिन्नशुद्धिनिरासाय सुतरामुद्योगे विहितेऽपि चेतश्चाञ्चल्या-दल्पप्रज्ञत्वात् प्रमादाधिक्याच्चाधुनाप्यशुद्धयोऽवशिष्टा भवेयुरिति सम्भावयामः। आशास्महे करुणावरुणालया विद्वांसस्ताः संसूच्य—

**गच्छतः स्खलनं क्वापि भवत्येव प्रमादतः।**
**हसन्ति दुर्जनास्तत्र समादधति सज्जनाः।।**

इति सूक्तेः सार्थकतामापादयन्तो मामनुग्रहीष्यन्तीति निवेद्य विरमामीतिशम्।

विदुषां विधेयः—
**डॉ० रमाशङ्कर मिश्रः**

गुरु पूर्णिमा २०५४ वि०
सी०के० ६४/३६ ए, हीरापुरा,
जालपादेवी रोड़, वाराणसी

# विषयसूची

।। श्रीरस्तु ।।

# ।। सवार्तिकगणाष्टाध्यायीसूत्रपाठः ।।

येनाक्षरसमाम्नायमधिगम्य महेश्वरात्।
कृत्स्नं व्याकरणं प्रोक्तं तस्मै पाणिनये नमः।।

येन धौता गिरः पुंसां विमलैः शब्दवारिभिः।
तमश्चाज्ञानजं भिन्नं तस्मै पाणिनये नमः।।

वाक्यकारं वररुचिं भाष्यकारं पतञ्जलिम्।
पाणिनिं सूत्रकारं च प्रणतोऽस्मि मुनित्रयम्।।

**अइउण्। ऋलृक्। एओङ्। ऐऔच्। हयवरट्।**
**लण्। ञमङणनम्। झभञ्। घढधष्।**
**जबगडदश्। खफछठथचटतव्।**
**कपय्। शषसर्। हल्।**
**इति प्रत्याहारसूत्राणि।।**

## प्रथमोऽध्यायः
### प्रथमः पादः

१. वृद्धि[१]रादैच्
२. अदेङ् गु[२]णः
३. इको गुणवृद्धी[३]
४. न[४] धातुलोप आर्धधातुके
५. क्ङिति च
६. दीधीवेवीटाम्
७. हलोऽनन्तराः संयोगः
८. मुखनासिकावचनोऽनुनासिकः
९. तुल्यास्यप्रयत्नं सवर्णम्[५]
(वा०) ऋलृवर्णयोर्मिथः सावर्ण्यं वाच्यम्
१०. नाज्झलौ
११. ईदूदेद्द्विवचनं प्रगृह्यम्[६]
१२. अदसो मात्
१३. शे
१४. निपात[७] एकाजनाङ्
१५. ओत्[८]
१६. संबुद्धौ शाकल्यस्येतावनार्षे[९]
१७. उञः
१८. ऊँ
१९. ईदूतौ च सप्तम्यर्थे
२०. दाधा घ्वदाप्

---

**विमर्श**

१-इस सूत्र से 'वृद्धिः' पद की अनुवृत्ति १।१।३। में जाती है। २-इस सूत्र से 'गुणः' की अनुवृत्ति १।१।३। तक जाती है। ३-इस सम्पूर्ण सूत्र की अनुवृत्ति १।१।६। तक जाती है। ४-यहाँ से 'न' पद की अनुवृत्ति १।१।६।तक जाती है। ५-इस समस्त सूत्र की अनुवृत्ति १।१।१०। तक जाती है। ६-यहाँ से 'प्रगृह्यम्' पद की अनुवृत्ति १।१।१९ तक तथा 'ईदूदेत्' पद की अनुवृत्ति १।१।१२। तक जाती है। ७-यहाँ से 'निपात' पद की अनुवृत्ति १।१।१५। तक जाती है। ८-'ओत्' की अनुवृत्ति १।१।१६। तक जाती है। ९. यहाँ से 'शाकल्यस्य' 'इतौ' 'अनार्षे' की अनुवृत्ति १।१।१७। तक जायेगी।

२१. आद्यन्तवदेकस्मिन्
२२. तरप्तमपौ घः
२३. बहुगणवतुडति संख्या[१]
२४. ष्णान्ता षट्[२]
२५. डति च
२६. क्तक्तवतू निष्ठा
२७. सर्वादीनि सर्वनामानि[३]

(ग.सू.) सर्व विश्व उभ उभय डतर डतम अन्य अन्यतर इतर त्वत् त्व नेम सम सिम। 'पूर्व[१]परावरदक्षिणोत्तरापराधराणि व्यवस्थायामसंज्ञायाम्' 'स्व[२]मज्ञातिधनाख्यायाम्। 'अन्तरं बहिर्योगोपसंव्यानयोः[३]। त्यद् तद् यद् एतद् इदम् अदस् एक द्वि युष्मद् अस्मद् भवतु किम्।।इति सर्वादिः।।१।।

२८. विभाषा दिक्समासे बहुव्रीहौ
२९. न[४] बहुव्रीहौ
३०. तृतीयासमासे[५]
३१. द्वन्द्वे[६] च
३२. विभाषा जसि[७]
३३. प्रथमचरमतयाल्पार्धकतिपयनेमाश्च
३४. पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायामसंज्ञायाम्
३५. स्वमज्ञातिधनाख्यायाम्
३६. अन्तरं बहिर्योगोपसंव्यानयोः
(वा.) अपुरीति वक्तव्यम्
(वा.) विभाषाप्रकरणे तीयस्य ङित्सूपसंख्यानम्
३७. स्वरादिनिपातमव्ययम्[८]

(ग.सू.) स्वर् अन्तर् प्रातर् अन्तोदात्ताः। पुनर् सनुतर् उच्चैस् नीचैस् शनैस् ऋधक् ऋते युगपत् आरात् (अन्तिकात्) पृथक्-आद्युदात्ताः। ह्यस् श्वस् दिवा रात्रौ सायम् चिरम् मनाक् ईषत् (शश्वत्) जोषम् तूष्णीम् बहिस् अधस् (अवस्) समया निकषा स्वयम् मृषा नक्तम् नञ् हेतौ (हे है) इद्धा अद्धा सामि-अन्तोदात्ताः।। 'वत्' बत सनत् सनात् तिरस्-आद्युदात्ताः। अन्तरा-अन्तोदात्तः। (अन्तरेण) मक् ज्योक् योक् नक् कम् शम् सना सहसा श्रद्धा अलम् स्वधा वषट् विना नाना स्वस्ति अन्यत् अस्ति उपांशु क्षमा विहायसा दोषा मुधा दिष्ट्या वृथा मिथ्या। 'क्त्वातोसुन्कसुनः, कृन्मकारसंध्यक्षरान्तः, 'अव्ययीभावश्च'। पुरा मिथो मिथस् (प्रायस् मुहुस्) प्रबाहुकम् (प्रवाहिका) आर्यहलम् अभीक्ष्णम् साकम् सार्धम् सत्रम् समम् नमस् हिरुक्। तसिलादयस्तद्धिता एधाच्पर्यन्ताः, शस्तसी, कृत्वसुच्, सुच्, आस्थालौ, च्व्यर्थाश्च, (अथ) अम्, आम्, प्रताम् (प्रतान्) प्रशान्-आकृतिगणोऽयम्।

---

**विमर्श**

१-इस सूत्र से 'संख्या' पद की अनुवृत्ति १।१।२५। तक जाती है। २-'षट्' पद की अनुवृत्ति १।१।२५ तक जाती है। ३-इस सूत्र से 'सर्वनामानि' पद की अनुवृत्ति १।१।३६। तक तथा 'सर्वादीनि' पद की अनुवृत्ति १।१।३२। तक जाती है। ४-'न' पद की अनुवृत्ति १।१।३२। तक जाती है। ५-इस सूत्र से 'समासे' पद की अनुवृत्ति १।१।३२। तक जाती है। ६-'द्वन्द्वे' पद की अनुवृत्ति १।१।३२ तक जायेगी। ७-इस समस्त सूत्र की अनुवृत्ति १।१।३६ तक जायेगी। ८-इस सूत्र से 'अव्ययम्' पद की अनुवृत्ति १।१।४१। तक जाती है।

तेनान्येऽपि। तथाहि माङ् श्रम् कामम् (प्रकामम्) भूयस् परम् साक्षात् साचि (सावि) सत्यम् मङ्क्षु संवत अवश्यम् सपदि प्रादुस् आविस् अनिशम् नित्यम् नित्यदा सदा अजस्रम् सन्ततम् उषा ओम् भूर् भुवर् झटिति तरसा सुष्ठु कु अञ्जसा अ मिथु (अमिथु) विथक् भाजक् अन्वक् चिराय चिरम् चिररात्राय चिरस्य चिरेण चिरात् अस्तम् आनुषक् अनुषक् अनुषट् अम्नस् (अम्भस्) अम्भर (अम्भर्) स्थाने वरम् दुष्टु बलात् शु अर्वाक् शुदि वर्दि इत्यादि। तसिलादयः प्राक्पाशपः। शस्प्रभृतयः प्राक्समासान्तेभ्यः। मान्तः कृत्वोऽर्थः। तसिवती। नानाञाविति-इति स्वरादिः।।२।।

३८. तद्धितश्चासर्वविभक्तिः
३९. कृन्मेजन्तः
४०. क्त्वातोसुन्कसुनः
४१. अव्ययीभावश्च
४२. शि सर्वनामस्थानम्[1]
४३. सुडनपुंसकस्य
४४. न वेति विभाषा
४५. इग्यणः संप्रसारणम्
४६. आद्यन्तौ टकितौ
४७. मिदचोऽन्त्यात्परः

(वा०) अन्त्यात्पूर्वो मस्जेरनुषङ्ग-संयोगादिलोपार्थम्

४८. एच इग्घ्रस्वादेशे
४९. षष्ठी स्थाने[2] योगा
५०. स्थानेऽन्तरतमः
५१. उरण्रपरः

(वा०) लपर इति वक्तव्यम्।

५२. अलोऽन्त्यस्य[3]
५३. ङिच्च
५४. आदेः परस्य
५५. अनेकाल्शित्सर्वस्य
५६. स्थानिवदादेशो[4]ऽनल्विधौ
५७. अचः परस्मिन्पूर्वविधौ[5]
५८. न पदान्तद्विर्वचनवरेयलोपस्वर-सवर्णानुस्वारदीर्घजश्चर्विधिषु

(वा०) स्वरदीर्घयलोपेषु लोपाजादेशो न स्थानिवत्।

(वा०) क्विलुगुपधात्वचङ्पर-निर्ह्रासकुत्वेषूपसंख्यानम्।

(वा०)पूर्वत्रासिद्धे न स्थानिवत्।

(वा०) तस्य दोषः संयोगादि-लोपलत्वणत्वेषु ।

५९. द्विर्वचनेऽचि
६०. अदर्शनं[6] लोपः
६१. प्रत्ययस्य लुक्श्लुलुपः
६२. प्रत्ययलोपे प्रत्ययलक्षणम्[7]।

(वा०) वर्णाश्रये नास्ति प्रत्यय-लक्षणम्।

६३. न लुमताऽङ्गस्य

---

**विमर्श**

१- इस सूत्र से 'सर्वनामस्थानम् ' पद की अनुवृत्ति १।१।४३ तक जायेगी । २- 'स्थाने' पद की अनुवृत्ति १।१।५१ तक तथा 'षष्ठी ' पद की अनुवृत्ति १।१।५५ तक जाती है । ३- यहां से 'अलः' की अनुवृत्ति १।१।५४ तक तथा 'अन्त्यस्य ' की अनुवृत्ति १।१।५३ तक जाती है । ४- यहां से 'स्थानिवदादेशः ' की अनुवृत्ति १।१।५९। तक जायेगी। ५. यहाँ से 'अचः' पद की अनुवृत्ति १।१।५९। तक तथा 'परस्मिन्' 'पूर्वविधौ' इन दो पदों की अनुवृत्ति १।१।५८। तक जायेगी। ६- यहां से 'अदर्शनं ' पद की अनुवृत्ति १।१।६१ तक जाती है । इस सूत्र में 'न वेति विभाषा ' (१।१।४४ ) से मण्डूकप्लुतगति द्वारा 'इति' की अनुवृत्ति आती है । ७- इस सम्पूर्ण सूत्र की अनुवृत्ति १।१।६३ तक जाती है ।

(वा०) उत्तरपदत्वे चापदादि-
विधौ।

६४. अचोऽन्त्यादि टि

६५. अलोऽन्त्यात्पूर्व उपधा

(वा०) नानर्थकेऽलोंऽन्त्यविधि-
रनभ्यासविकारे।

६६. तस्मिन्निति[1] निर्दिष्टे पूर्वस्य

६७. तस्मादित्युत्तरस्य

६८. स्वं रूपं[2] शब्दस्याशब्दसंज्ञा

(वा०) अर्थवद्ग्रहणे नानर्थकस्य
ग्रहणम्।

६९. अणुदित्सवर्णस्य[3] चाप्रत्ययः

७०. तपरस्तत्कालस्य

७१. आदिरन्त्येन सहेता

७२. येन विधिस्तदन्तस्य

(वा०) यस्मिन्विधिस्तदादाव-
ल्ग्रहणे।

(वा०) समासप्रत्ययविधौ
प्रतिषेधः।

(वा०) उगिद्वर्णग्रहणवर्जम् ।

(वा०) सुसर्वार्धदिक्छब्देभ्योजनपदस्य।

(वा०) ऋतोर्वृद्धिमद्विधाववयवानाम्।

(वा०) पदाङ्गाधिकारे तस्य च तदुत्तर-
पदस्य च।

(वा०) तन्मध्यपतितस्तद्ग्रहणेन
गृह्यते।

(वा०) अनिनस्मन्ग्रहणान्यर्थवता
चानर्थकेन च तदन्तविधिं
प्रयोजयन्ति।

(वा०) प्रत्ययग्रहणे चापञ्चम्याः।

७३. वृद्धिर्यस्याचामादिस्तद्वृद्धम्[4]

(वा०) वा नामधेयस्य।

७४. त्यदादीनि च

७५. एङ् प्राचां देशे

(वा०) शैषिकेष्विति वक्तव्यम्।

(वृद्धिराद्यन्तवदव्ययीभावः प्रत्य-यस्य-
लुक्पञ्चदश)

इति पाणिनीयसूत्रपाठे प्रथमस्याध्यायस्य प्रथमः पादः।



**विमर्श**

१–इस सूत्र में भी 'इति' शब्द अर्थनिर्देश के लिए है । इस सूत्र से 'निर्दिष्टे' पद की अनुवृत्ति १।१।६७ तक जाती है । २–यहां से 'स्वं रूपं' पद की अनुवृत्ति १।१।७२ तक जायेगी । ३–यहां से 'सवर्णस्य' पद की अनुवृत्ति १।१।७० तक जाती है। ४-यहां से 'वृद्धम्' पद की अनुवृत्ति १।१।७५। तक तथा 'यस्याचामादिः' की अनुवृत्ति १।१।७५ में ही जाती है।

## द्वितीयः पादः

१. गाङ्कुटादिभ्योऽञ्णिन्ङित्[१]।
(वा०) व्यचेः कुटादित्वमनसि।
२. विज इट्[२]
३. विभाषोर्णोः
४. सार्वधातुकमपित्[३]
५. असंयोगाल्लिट्कित्[४]
(वा०) ऋदुपधेभ्यो लिटः कित्त्वं गुणात्पूर्वविप्रतिषेधेन।
६. इन्धिभवतिभ्यां च
(वा०) श्रन्थिग्रन्थिदम्भिस्वञ्जीनां लिटः कित्त्वं वा।
७. मृडमृदगुधकुषक्लिशवदवसः क्त्वा[५]
८. रुदविदमुषग्रहिस्वपिप्रच्छः संश्च[६]
९. इको झल्[७]
१०. हलन्ताच्च[८]
११. लिङ्सिचावात्मनेपदेषु[९]
१२. उश्च
१३. वा गमः
१४. हनः सिच्[१०]
१५. यमो[११] गन्धने
१६. विभाषोपयमने
१७. स्थाघ्वोरिच्च
१८. न क्त्वा सेट्[१२]
१९. निष्ठा[१३] शीङ्स्विदिमिदिक्ष्विदिधृषः
२०. मृषस्तितिक्षायाम्
२१. उदुपधाद्भावादिकर्मणोरन्यतरस्याम्
२२. पूङः क्त्वा[१४] च
२३. नोपधात्थफान्ताद्वा[१५]
२४. वञ्चि–लुञ्च्यृतश्च
२५. तृषिमृषिकृशेः काश्यपस्य
२६. रलो व्युपधाद्धलादेः संश्च
२७. ऊकालोऽज्झ्रस्वदीर्घप्लुतः[१६]
२८. अचश्च
२९. उच्चैरुदात्तः

---

**विमर्श**

१–इस सूत्र में गाङ् से इङ् धातु का आदेश 'गाङ्' गृहीत किया गया है । कुटादिगण भी 'कुट कौटिल्ये' इस तुदादि गण के धातु से प्रारम्भ कर 'कूङ् शब्दे' तक जानना चाहिए। यहां से 'ङित्' की अनुवृत्ति १।२।४ तक जाती है। २–'इट्' की अनुवृत्ति१।२।३तक जाती है । ३–इस सूत्र से 'अपित्' की अनुवृत्ति १।२।५ तक जायेगी । ४–इस सूत्र से 'लिट्' की अनुवृत्ति १।२।६ तक तथा 'कित्' की अनुवृत्ति १।२।२६ तक जाती है । ५–इस सूत्र से 'क्त्वा' की अनुवृत्ति १।२।८ तक जायेगी। ६–यहां से 'सन्' की अनुवृत्ति १।२।१० तक जाती है । ७–इस सूत्र से 'इकः' की अनुवृत्ति १।२।११ तक तथा 'झल्' की अनुवृत्ति १।२।१३ तक जाती है । ८–इस सूत्र से 'हलन्तात्' की अनुवृत्ति १।२।११ तक जाती है । ९–इस सूत्र से 'लिङ्सिचौ' की अनुवृत्ति १।२।१३ तक तथा 'आत्मनेपदेषु' की १।२।१७ तक जाती है । १०-'सिच्' की अनुवृत्ति १।२।१७ तक जायेगी। ११– 'यमः' की अनुवृत्ति १।२।१६ तक जाती है । १२–इस सूत्र से 'न' 'सेट्' की अनुवृत्ति १।२।२६ तक जाती है । १३–'निष्ठा' की अनुवृत्ति १।२।२२तक जाती है । १४-'क्त्वा' की अनुवृत्ति १।२।२६ तक जाती है। १५–इस सूत्र से 'वा' की अनुवृत्ति १।२।२६ तक जाती है । १६– इस सूत्र से 'ह्रस्वदीर्घप्लुतः' की अनुवृत्ति १।२।२८ तक तथा 'अच्' की १।२।३१ तक जाती है ।

३०. नीचैरनुदात्तः
३१. समाहारः स्वरितः
३२. तस्यादित उदात्तमर्धह्रस्वम्
३३. एकश्रुति[१] दूरात्संबुद्धौ
३४. यज्ञकर्मण्य[२]जपन्यूङ्खसामसु
३५. उच्चैस्तरां वा वषट्कारः
३६. विभाषा छन्दसि
३७. न सुब्रह्मण्यायां स्वरितस्य तूदात्तः[३]
३८. देवब्रह्मणोरनुदात्तः
३९. स्वरितात्संहितायामनुदात्तानाम्[४]
४०. उदात्तस्वरितपरस्य सन्नतरः[५]
४१. अपृक्त एकाल्प्रत्ययः
४२. तत्पुरुषः समानाधिकरणकर्मधारयः
४३. प्रथमानिर्दिष्टं समास उपसर्जनम्[६]
४४. एकविभक्ति चापूर्वनिपाते
(वा०) एक विभक्तावषष्ठ्यन्तवचनम्
४५. अर्थवदधातुरप्रत्ययः प्रातिपदिकम्[७]
(वा०) निपातस्यानर्थकस्य प्रातिपदिकसंज्ञा वक्तव्या।
४६. कृत्तद्धितसमासाश्च
४७. ह्रस्वो नपुसंके प्रातिपदिकस्य[८]
४८. गोस्त्रियोरुपसर्जनस्य[९]
(वा०) ईयसो बहुव्रीहेर्नेति वाच्यम्।
४९. लुक्तद्धितलुकि[१०]
५०. इद् गोण्याः
५१. लुपि युक्तवद् व्यक्तिवचने[११]
(वा०) समास उत्तरपदस्य बहुवचनस्य लुपः।
५२. विशेषणानां चाजातेः
(वा०) हरीतक्यादिषु व्यक्तिः।
(वा०) खलतिकादिषु वचनम्।
(वा०) मनुष्यलुपि प्रतिषेधः।
५३. तदशिष्यं[१२] संज्ञाप्रमाणत्वात्
५४. लुब्योगाप्रख्यानात्
५५. योगप्रमाणे च तदभावेऽदर्शनं स्यात्

---

**विमर्श**

१–इस सूत्र से 'एकश्रुति' की अनुवृत्ति १।२।३९ तक जायेगी। २–यहां से 'यज्ञकर्मणि' की अनुवृत्ति १।२।३५ तक जायेगी। ३–इस सूत्र से 'स्वरितस्य' की अनुवृत्ति १।२।३८ तक जाती है। ४–'अनुदात्तानाम्' की अनूवृत्ति १।२।४० तक जाती है । ५–'सन्नतर' यह अनुदात्ततर की संज्ञा है । ६–यहां 'समासे' इस पद से "समास विधान करने वाला सूत्र" यह अर्थ ग्रहण करना है । "समास उपसर्जनम्" की अनुवृत्ति १।२।४४ तक जाती है । ७–'प्रातिपदिकम्' की अनुवृत्ति १।२।४६ तक जाती है । ८–इस सूत्र से 'ह्रस्वः' 'प्रातिपदिकस्य' की अनुवृत्ति १।२।४८ तक जाती है । ९–इस सूत्र में 'स्त्री' शब्द से "स्त्रियाम्" (४।१।३) के अधिकार में कहे गये टाप्, डाप्, चाप्, ङीप् ,ङीष्, ङीन्, स्त्री प्रत्यय लिये गये हैं, न कि 'स्त्री' शब्द ग्रहण किया गया है । यहां से 'स्त्री' तथा 'उपसर्जनस्य' की अनुवृत्ति १।२।४९ तक जाती है। १०–इस सूत्र से 'तद्धितलुकि' की अनवृत्ति १।२।५० तक जाती है । ११–इस 'अशेष' सूत्र की अनुवृत्ति १।२।५२ तक जाती है । १२-यहां से 'अशिष्यम्' की अनुवृत्ति १।२।५७ तक जाती है।

५६. प्रधानप्रत्ययार्थवचनमर्थस्यान्य-प्रमाणत्वात्।

५७. कालोपसर्जने च तुल्यम्

५८. जात्याख्यायामेकस्मिन्वहुवचन-मन्यतरस्याम्[१]

(वा०) संख्याप्रयोगे प्रतिषेधः।

५९. अस्मदो द्वयोश्च[२]

(वा०) सविशेषणस्य प्रतिषेधः।

६०. फल्गुनीप्रोष्ठपदानां च नक्षत्रे[३]

६१. छन्दसि पुनर्वस्वोरेकवचनम्[४]

६२. विशाखयोश्च

६३. तिष्यपुनर्वस्वोर्नक्षत्रद्वन्द्वे बहु-वचनस्य द्विवचनं नित्यम्

६४. सरूपाणामेकशेष[५] एकविभक्तौ

(वा०) विरूपाणामपि समानार्थ-कानामेकशेषो वक्तव्यः।

६५. वृद्धो यूना तल्लक्षणश्चेदेव विशेषः[६]

६६. स्त्री पुंवच्च

६७. पुमान्स्त्रिया

६८. भ्रातृपुत्रौ स्वसृदुहितृभ्याम्

६९. नपुंसकमनपुंसकेनैकवच्चा-स्यान्यतरस्याम्[७]

७०. पिता मात्रा

७१. श्वशुरः श्वश्र्वा

७२. त्यदादीनि सर्वैर्नित्यम्

(वा०) त्यदादितः शेषे पुंनपुंस-कतो लिङ्गवचनानि।

(वा०) अद्वन्द्वतत्पुरुषविशेषणा-नाम्।

७३. ग्राम्यपशुसङ्घेष्वतरुणेषु स्त्री

(वा०) अनेकशफेष्विितिवक्तव्यम्।

(गाङ्कुटाद्युदुपधादपृक्तश्छन्दसि पुन-र्वस्वोस्त्रयोदश)

इति पाणिनीयसूत्रपाठे प्रथमस्याध्यायस्य द्वितीयः पादः।



---

**विमर्श**

१–इस सूत्र से 'एकस्मिन्' की अनुवृत्ति १।२।५९ तक तथा 'बहुवचनम्' की अनुवृत्ति १।२।६० तक, एवं 'अन्यतरस्याम्' की अनुवृत्ति १।२।६२ तक जाती है । २–यहां से द्वयोः की अनुवृत्ति १।२।६१ तक जाती है। ३–इस सूत्र से 'नक्षत्रे' की अनुवृत्ति १।२।६२ तक जाती है। ४–यहां से 'छन्दसि' 'एकवचनम्' की अनुवृत्ति १।२।६२ तक जायेगी। ५–इस सूत्र से 'एकशेषः' की अनुवृत्ति १।२।७३ तक जाती है। ६–यहां से 'वृद्धो यूना' की अनुवृत्ति १।२।६६ तक तथा 'तल्लक्षणश्चेदेव विशेषः की अनुवृत्ति १।२।६९ तक जाती है। ७–इस सूत्र से 'अन्यतरस्याम्' की अनुवृत्ति १।२।७१ तक जाती है ।

# तृतीयः पादः

१. भूवादयो धातवः
२. उपदेशेऽजनुनासिक इत्[1]
३. हलन्त्यम्
४. न विभक्तौ तुस्माः
५. आादि[2]र्ञिटुडवः
६. षः प्रत्ययस्य[3]
७. चुटू
(वा०) इर इत्संज्ञा वक्तव्या।
८. लशक्वतद्धिते
९. तस्य लोपः
१०. यथासंख्यमनुदेशः समानाम्
११. स्वरितेनाधिकारः
१२. अनुदात्तङित आत्मनेपदम्[4]
१३. भावकर्मणोः[5]
१४. कर्तरि कर्मव्यतिहारे[6]
१५. न[7] गतिहिंसार्थेभ्यः
(वा०) हसादीनामुपसंख्यानम्।
(वा०) हरतेरप्रतिषेधः।
१६. इतरेतरान्योऽन्योपपदाच्च
(वा०) परस्परोपपदाच्चेति वक्तव्यम्।
१६. नेर्विशः
१८. परिव्यवेभ्यः क्रियः
१९. विपराभ्यां जेः
२०. आङो[8] दोऽनास्यविहरणे
(वा०) स्वाङ्गकर्मकाच्चेति वक्तव्यम्।
२१. क्रीडोऽनुसंपरिभ्यश्च
(वा०) समोऽकूजने।
(वा०) आगमेः क्षमायाम्।
(वा०) शिक्षेर्जिज्ञासायाम्।
(वा०) किरतेर्हर्षजीविकाकुलाय-करणेषु।
(वा०) हरतेर्गतताच्छील्ये।
(वा०) आङि नुप्रच्छयोः
(वा०) आशिषि नाथः।
(वा०) शप उपालम्भने।
२२. समवप्रविभ्यः स्थः[9]
(वा०) आङः प्रतिज्ञायाम्।

---

**विमर्श**

१–इस सूत्र से 'उपदेशे' तथा 'इत्' की अनुवृत्ति १।३।८। तक जाती है। २–यहां से 'आदिः' की अनुवृत्ति १।३।८। तक जाती है। ३–इस सूत्र से 'प्रत्ययस्य'–की अनुवृत्ति १।३।८। तक जाती है। ४–यहां से 'आत्मनेपदम्' का अधिकार १।३।७७ तक जाता है। ५–भाव तथा कर्म में चार बातें कर्तृवाच्य से विशेष होती हैं। (क) आत्मनेपद जो इसी (१।३।१३) सूत्र से होता है। (ख) यक् सार्वधातुके यक् (३।१।६७) से होता है। (ग) चिण्-चिण् भावकर्मणोः (३।१।६६) से होता है। (घ) चिण्वद्भाव-स्य सिच् – – चिण्वदिट् च (६।४।६२) से होता है। ६–यहां से कर्मव्यतिहारे की अनुवृत्ति १।३।१६ तक जाती है। ७–इस सूत्र से 'न' की अनुवृत्ति १।३।१६ तक जाती है। ८–यहां से 'आङः' की अनुवृत्ति १।३।२१ तक जाती है। ९–इससूत्र से 'स्थः' की अनुवृत्ति १।३।२६ तक जाती है।

२३. प्रकाशनस्थेयाख्ययोश्च
२४. उदोऽनूर्ध्वकर्मणि
(वा०) ईहायामिति वक्तव्यम्।
२५. उपान्मन्त्रकरणे
(वा०) उपाद्देवपूजासंगतिकरण-मित्रकरणपथिष्विति वक्तव्यम्।
(वा०) वा लिप्सायामिति वक्तव्यम्।
२६. अकर्मकाच्च[1]
२७. उद्विभ्यां तपः
(वा०) स्वाङ्गकर्मकाच्च।
२८. आङो यमहनः
(वा०) स्वाङ्गकर्मकाच्च।
२९. समो गम्यृच्छिभ्याम्
(वा०) विदिप्रच्छिस्वरतीनामुपसंख्यानम्।
(वा०) अर्तिश्रुदृशिभ्यश्च।
(वा०) उपसर्गादस्यत्यूह्योर्वा वचनम्।
३०. निसमुपविभ्यो ह्वः[2]
३१. स्पर्धायामाङः
३२. गन्धनावक्षेपणसेवनसाहसिक्य-प्रतियत्नप्रकथनोपयोगेषु कृञः[3]
३३. अधेः प्रसहने
३४. वेः[4] शब्दकर्मणः
३५. अकर्मकाच्च
३६. संमाननोत्सञ्जनाचार्यकरणज्ञान-भृतिविगणनव्ययेषु नियः[5]
३७. कर्तृस्थे चाशरीरे कर्मणि
३८. वृत्तिसर्गतायनेषु क्रमः[6]
३९. उपपराभ्याम्
४०. आङ् उद्गमने
(वा०) ज्योतिरुद्गमन इति वक्तव्यम्।
४१. वेः पादविहरणे
४२. प्रोपाभ्यां समर्थाभ्याम्
४३. अनुपसर्गाद्वा
४४. अपह्नवे ज्ञः[7]
४५. अकर्मकाच्च
४६. संप्रतिभ्यामनाध्याने
४७. भासनोपसंभाषाज्ञानयत्नविमत्युप-मन्त्रणेषु वदः[8]
४८. व्यक्तवाचां समुच्चारणे[9]
४९. अनोरकर्मकात्
५०. विभाषा विप्रलापे
५१. अवाद् ग्रः[10]
५२. समः प्रतिज्ञाने
५३. उदश्चरः[11] सकर्मकात्

---

**विमर्श**

१–यहां से 'अकर्मकात्' की अनुवृत्ति १।३।२९ तक जाती है। २–इस सूत्र से 'ह्वः' की अनुवृत्ति १।३।३१ तक जाती है। ३-इस सूत्र से 'कृञः' की अनुवृत्ति १।३।३५ तक जाती है। ४–यहां से 'वेः' की अनुवृत्ति १।३।३५ तक जाती है। ५–इस सूत्र से 'नियः' की अनुवृत्ति १।३।३७ तक जाती है। ६-इस सूत्र से 'क्रमः' की अनुवृत्ति १।३।४३ तक जायेगी तथा 'वृत्तिसर्गतायनेषु' की अनुवृत्ति १।३।३९ तक जायेगी। ७–इससूत्र से 'ज्ञः' की अनुवृत्ति १।३।४६ तक जायेगी। ८–यहां से 'वदः' की अनुवृत्ति १।३।५० तक जायेगी। ९–इस निखिल सूत्र की अनुवृत्ति १।३।५० तक जाती है। १०–यहां से 'ग्रः' की अनुवृत्ति १।३।५२ तक जाती है। ११–इस सूत्र से 'चरः' पद की अनुवृत्ति १।३।५४ तक जाती है ।

५४. समस्तृतीयायुक्तात्[1]
५५. दाणश्च सा चेच्चतुर्थ्यर्थे
(वा०) अशिष्टव्यवहारे दाणः प्रयोगे चतुर्थ्यर्थे तृतीया भवतीति वक्तव्यम्।
५६. उपाद्यमः स्वकरणे
५७. ज्ञाश्रुस्मृदृशां सनः[2]
५८. ना[3] नोर्ज्ञः
५९. प्रत्याङ्भ्यां श्रुवः
६०. शदेः शितः[4]
६१. म्रियतेर्लुङ्लिङोश्च
६२. पूर्ववत्सनः
६३. आम्प्रत्ययवत्कृञोऽनुप्रयोगस्य
६४. प्रोपाभ्यां युजेरयज्ञपात्रेषु
(वा०) स्वराद्यन्तोपसृष्टादिति वक्तव्यम्।
६५. समः क्ष्णुवः
६६. भुजोऽनवने
६७. णे[5]रणौ यत्कर्म णौ चेत्स कर्ताऽनाध्याने
६८. भीस्म्योर्हेतुभये
६९. गृधिवञ्च्योः प्रलम्भने[6]
७०. लियः संमाननशालीनीकरणयोश्च
७१. मिथ्योपपदात्कृञोऽभ्यासे
७२. स्वरितञितः कर्त्रभिप्राये क्रियाफले[7]
७३. अपाद्वदः
७४. णिचश्च
७५. समुदाङ्भ्यो यमोऽग्रन्थे
७६. अनुपसर्गाज्ज्ञः
७७. विभाषोपपदेन प्रतीयमाने
७८. शेषात्कर्तरि परस्मैपदम्[8]
७९. अनुपराभ्यां कृञः
८०. अभिप्रत्यतिभ्यः क्षिपः
८१. प्राद्वहः
८२. परेर्मृषः
८३. व्याङ्परिभ्यो रमः[9]
८४. उपाच्च
८५. विभाषाऽकर्मकात्
८६. बुधयुधनशजनेङ्प्रुद्रुस्रुभ्यो णेः[10]
८७. निगरणचलनार्थेभ्यश्च
(वा०) अदेः प्रतिषेधः।
८८. अणावकर्मकाच्चित्तवत्कर्तृकात्
८९. न पादम्याङ्यमाङ्यसपरिमुहरुचिनृतिवदवसः
(वा०) पादिषु धेट उपसंख्यानम्।
९०. वा[11] क्यषः
९१. द्युद्भ्यो लुङि
९२. वृद्भ्यः स्यसनोः[12]
९३. लुटि च क्लृपः
(भूवादयः क्रीडोऽनुवेः पादम्रियतेः प्राद्वहस्त्रयोदश।)

इतिपाणिनीयसूत्रपाठे प्रथमस्याध्यायस्य तृतीयः पादः।

---

**विमर्श**

१-इस समस्त सूत्र की अनुवृत्ति १।३।५५। तक जायेगी। २-यहाँ से 'सनः' की अनुवृत्ति १।३।५९। तक जायेगी। ३-इस सूत्र से 'न' की अनुवृत्ति १।३।५९। तक जाती है। ४-इस सूत्र से 'शितः' की अनुवृत्ति १।३।६१। तक जाती है। ५-इस सूत्र से 'णेः' की अनुवृत्ति १।३।७१। तक जाती है। ६-यहाँ से 'प्रलम्भने' की अनुवृत्ति १।३।७०। तक जाती है। ७-यहाँ से 'कर्त्रभिप्राये क्रियाफले' की अनुवृत्ति १।३।७७। तक जायेगी। ८-इस सूत्र से 'परस्मैपदम्' की अनुवृत्ति पाद के अन्त १।३।९३। तक जाती है। ९-यहाँ से 'रमः' की अनुवृत्ति १।३।८५। तक जायेगी। १०-इस सूत्र से 'णेः' की अनुवृत्ति १।३।८९। तक जाती है। ११-यहाँ से 'वा' की अनुवृत्ति १।३।९३। तक जाती है। १२-यहाँ से 'स्यसनोः' की अनुवृत्ति १।३।९३ तक जाती है।

## चतुर्थः पादः

१. आकडारादेका संज्ञा[१]
२. विप्रतिषेधे परं कार्यम्
३. यू स्त्र्याख्यौ नदी[२]
(वा०) प्रथमलिङ्गग्रहणं च
४. नेयङुवङ्स्थानावस्त्री[३]
५. वा[४]ऽऽमि
६. ङिति ह्रस्वश्च[५]
७. शेषो[६] घ्यसखि
८. पतिः[७] समास एव
९. षष्ठीयुक्तश्छन्दसि वा
१०. ह्रस्वं[८] लघु
११. संयोगे गुरु[९]
१२. दीर्घं च
१३. यस्मात्प्रत्ययविधिस्तदादि-
प्रत्ययेऽङ्गम्
१४. सुप्तिङन्तं पदम्[१०]
५. नः क्ये
१६. सिति च
१७. स्वादिष्वसर्वनामस्थाने[११]
१८. यचि भम्[१२]
(वा०) नभोऽङ्गिरोमनुषां वत्युप-
संख्यानम्।
(वा०) वृषण् वस्वश्वयोः।
१९. तसौ मत्वर्थे
२०. अयस्मयादीनि छन्दसि
(वा०) उभयसंज्ञान्यपीती वक्तव्यम्
२१. बहुषु बहुवचनम्
२२. द्व्येकयोर्द्विवचनैकवचने
२३. कारके[१३]
२४. ध्रुवमपायेऽपादानम्[१४]
(वा०) जुगुप्साविरामप्रमा-
दार्थानामुपसंख्यानम्
२५. भीत्रार्थानां भयहेतुः
२६. पराजेरसोढः
२७. वारणार्थानामीप्सितः
२८. अन्तर्धौ येनादर्शनमिच्छति
२९. आख्यातोपयोगे
३०. जनिकर्तुः[१५] प्रकृतिः
३१. भुवःप्रभवः

---

**विमर्श**

१–'कडाराः कर्मधारये' इस सूत्र के पहले इसका अधिकार जानना चाहिए। २–इस सम्पूर्ण सूत्र की अनुवृत्ति १।४।६। तक जायेगी। ३–इस अशेष सूत्र की अनुवृत्ति भी १।४।६। तक जायेगी। ४–इस सूत्र से 'वा' की अनुवृत्ति १।४।६। तक जाती है। ५-यहां से 'ह्रस्वः' की अनुवृत्ति १।४।७। तक जायेगी। ६-इस सूत्र से 'घि' की अनुवृत्ति १।४।९। तक जाती है। ७-यहां से 'पतिः' की अनुवृत्ति १।४।९। तक जायेगी। ८-यहाँ से 'ह्रस्वः' की अनुवृत्ति १।४।११। तक जाती है। ९-यहां से 'गुरु' की अनुवृत्ति १।४।१२। तक जाती है। १०-इस सूत्र से 'पदम्' की अनुवृत्ति १।४।१७। तक जायेगी। ११-इस समस्त सूत्र की अनुवृत्ति १।४।१८। तक जाती है। १२-यहां से 'भम्' की अनुवृत्ति १।४।२० तक जाती है। १३-इस सूत्र का अधिकार १।४।५५।तक जाता है। १४-इससूत्र से 'अपादानम्' की अनुवृत्ति १।४।३१। तक जायेगी। १५-यहां से ' कर्तुः ' की अनुवृत्ति १।४।३१। तक जाती है।

३२. कर्मणा यमभिप्रैति स संप्रदानम्[1]
(वा०) क्रियया यमभिप्रैति स संप्रदानम्
(वा०) कर्मणः करणसंज्ञा संप्रदानस्य च कर्मसंज्ञा वक्तव्या।
३३. रुच्यर्थानां प्रीयमाणः
३४. श्लाघ-ह्नुङ्-स्था-शपां ज्ञीप्स्यमानः
३५. धारेरुत्तमर्णः
३६. स्पृहेरीप्सितः
३७. क्रुधद्रुहेर्ष्यासूयार्थानां यं प्रति कोपः[2]
३८. क्रुधद्रुहोरुपसृष्टयोः कर्म
३९. राधीक्ष्योर्यस्य विप्रश्नः
४०. प्रत्याङ्भ्यां श्रुवः पूर्वस्य कर्ता[3]
४१. अनुप्रतिगृणश्च
४२. साधकतमं करणम्[4]
४३. दिवः कर्म च
४४. परिक्रयणे संप्रदानमन्यतरस्याम्
४५. आधारो[5]ऽधिकरणम्
४६. अधिशीङ्स्थासां कर्म[6]
४७. अभिनिविशश्च
४८. उपान्वध्याङ्-वसः
(वा०) वसेरश्यर्थस्य प्रतिषेधः।
४९. कर्तुरीप्सिततमं कर्म[7]
५०. तथायुक्तं चानीप्सितम्
५१. अकथितं च
(वा०) अकर्मकधातुभिर्योगे देशः कालो भावो गन्तव्योऽध्वा च कर्मसंज्ञक इति वाच्यम्।
५२. गतिबुद्धिप्रत्यवसानार्थशब्द-कर्माकर्मकाणामणि कर्ता स णौ[8]
(वा०) जल्पतिप्रभृतीनामुपसंख्यानम्।
(वा०) दृशेश्च।
(वा०) अदिखाद्योर्न
(वा०) नीवह्योर्न
(वा०) नियन्तृकर्तृकस्य वहेरनिषेधः
(वा०) भक्षेरहिंसार्थस्य न।
(वा०) शब्दायतेर्न।
५३. हृक्रोरन्यतरस्याम्
(वा०) अभिवादिदृशोरात्मनेपदे वेति वाच्यम्।
५४. स्वतन्त्रः कर्ता[9]
५५. तत्प्रयोजको हेतुश्च
५६. प्राग्रीश्वरान्निपाताः[10]

---

**विमर्श**

१-इस सूत्र से 'संप्रदानम्' की अनवृत्ति १।४।४१ तक जाती है। २-यहां से 'यं प्रति कोपः' की अनुवृत्ति १।४।३८। तक जायेगी। ३-यहां से 'पूर्वस्य कर्ता' की अनुवृत्ति १।४।४१। तकजाती है। ४-इस समस्त सूत्र की अनुवृत्ति १।४।४४।तक जाती है। ५-यहाँ से 'आधारः' की अनुवृत्ति १।४।४८। तक जाती है। ६-इस सूत्र से 'कर्म' पद की अनुवृत्ति १।४।४८। तक जायेगी। ७-यहां से 'कर्म ' की अनुवृत्ति १।४।५३। तक जातीहै। ८-इस सूत्र से ' अणि कर्ता स णौ ' की अनुवृत्ति १।४।५३ तक जायेगी। ९-यहां से ' कर्ता ' की अनूवृत्ति १।४।५५तक जाती है। १०-यहां से 'निपाताः' का अधिकार ' विभाषा कृञि' (१।४।९८।) तक जाता है।

५७. चादयोऽसत्वे[1]

३. च वा ह (अह) एव एवम् नूनम् शश्वत् युपत् (युगपत्) (भूयस्) सूपत् कूपत् कुवित् नेत् चेत् चण् कच्चित् यत्र तत्र नह हन्त माकिम् (माकीम्) माकिर् नकिम् (नकीम्) नकिर् (आकिम्) माङ् नञ् तावत् यावत् त्वा त्वे त्वै (द्वै रै)रे श्रौषट् वौषट् वषट् स्वाहा स्वधा ओम् तथा (तथाहि) खलु किल अथ सु (सुष्ठु) स्म अ इ उ ऋ ऌ ए ऐ ओ औ आदह उञ् उकञ् वेलायाम् मात्रायाम् यथा यत् तत् किम् पुरा वधा (वध्वा) धिक् हाहा हे है (हहे) पाट् प्याट् आहो उताहो हो अहो नो (नौ) अथो ननु मन्ये मिथ्या असि ब्रूहि तु नु इति इव वत् वात् वन वत (सम् वशम् शिकम् दिकम्) सनुकम् छंवट् (छंवट) शङ्के शुकम् खम् सनात् सनतर् नहिकम् सत्यम् ऋतम् अद्ध इद्धा नोचेत् नचेत् नहि जातु कथम् कुतः कुत्र अव अनु हा हे (है) आहोस्वित् शम् कम् खम् दिष्ट्या पशु वट् सह (अनुषट्) आनुषक् अङ्ग फट् ताजक् (भाजक्) अये अरे बाट् (चाटु) कुम् खुम् घुम् अम् ईम् सीम् सिम् सि वै। 'उपसर्गविभक्तिस्वरप्रतिरूपकाश्च निपाताः' १६. आकृतिगणोऽयम्।। इति चादयः।।

५८. प्रादयः[2]

४. प्र परा अप सम् अनु अव निस् निर् दुस् दुर् वि आङ् नि अधि अपि अति सु उद् अभि प्रति परि उप–इति प्रादयः।।

(वा०) मरुच्छब्दस्योपसंख्यानम्।

(वा०) श्रच्छब्दस्योपसंख्यानम्।

५९. उपसर्गाः क्रियायोगे[3]

६०. गति[4] श्च

(वा०) कारिकाशब्दस्योपसंख्यानम्।

(वा०) पुनश्च नसौ छन्दसि।

(वा०) दुरः षत्वणत्वयोरुपसर्गत्वप्रतिषेधो वक्तव्यः।

६१. ऊर्यादिच्विडाचश्च

५. ऊरी उररी तन्थी ताली आताली वेताली धूली धूसी शकला संशकला ध्वंसकला भ्रंसकला गुलुगुधा सजूस् फल फली विल्की आल्की आलोष्ठी केवाली केवासी सेवासी (पर्याली) शेवाली वर्षाली अत्यूमशा वश्मशा (मस्मसा) मसमसा औषट् (श्रौषट्) वौषट् वषट् स्वाहा स्वधा बन्धा प्रादुस् अत् आविस् ।।इत्यूर्यादयः ।।

६२. अनुकरणं चानितिपरम्

६३. आदरानादरयोः सदसती

६४. भूषणेऽलम्

६५. अन्तरपरिग्रहे

(वा०) अन्तः शब्दस्याङ्किविधिणत्वेषूपसर्गत्वं वाच्यम्।

६६. कणेमनसी श्रद्धाप्रतीघाते

६७. पुरोऽव्ययम्[5]

६८. अस्तं च

६९. अच्छ गत्यर्थवदेषु

७०. अदोऽनुपदेशे

---

**विमर्श**

१-यहां से ' असत्वे ' की अनुवृत्ति १।४।५८। तक जाती है। २-इस सूत्र की अनुवृत्ति १।४।६०। तक जाती है। ३-इस सूत्र से 'क्रिया–योगे' की अनुवृत्ति १।४।७९। तक जाती है। ४-यहां से 'गतिः' की अनुवृत्ति १।४।७९। तक जाती है। ५-यहां से 'अव्ययम्' की अनुवृत्ति१।४।६९।तक जायेगी।

७१. तिरोऽन्तर्धौ[१]
७२. विभाषा कृञि[२]
७३. उपाजेऽन्वाजे
७४. साक्षात्प्रभृतीनि च
६. साक्षात् मिथ्या चिन्ता भद्रा रोचना आस्था अमा अद्धा प्राजर्या प्राजरूहा बीजर्या बीजरूहा संसर्या अर्थे लवणम् उष्णम् शीतम् उदकम् आर्द्रम् अग्नौ वशे विकसने प्रसहने प्रतपने प्रादुस् नमस्--आकृतिगणोऽयम्।। इति साक्षात्प्रभृतयः।।
(वा) च्व्यर्थ इति वक्तव्यम्।
७५. अनत्याधान[३] उरसिमनसी
७६. मध्ये पदे निवचने च
७७. नित्यं[४] हस्ते पाणावुपयमने
७८. प्राध्वं बन्धने
७९. जीविकोपनिषदावौपम्ये
८०. ते प्राग्धातोः[५]
८१. छन्दसि[६] परेऽपि
८२. व्यवहिताश्च
८३. कर्मप्रवचनीयाः[७]
८४. अनु[८]र्लक्षणे
८५. तृतीयार्थे
८६. हीने[९]
८७. उपोऽधिके च
८८. अपपरी वर्जने
८९. आङ् मर्यादावचने
(वा०) आङ्मर्यादाभिविध्योरिति- वक्तव्यम्।
९०. लक्षणेत्थंभूताख्यानभागवीप्सासु[१०] प्रतपर्यनवः
९१. अभिरभागे
९२. प्रतिः प्रतिनिधिप्रतिदानयोः
९३. अधिपरी अनर्थकौ
९४. सुः पूजायाम्[११]
९५. अतिरतिक्रमणे च
९६. अपिः पदार्थसंभावनान्ववसर्ग गर्हासमुच्चयेषु
९७. अधि[१२] रीश्वरे
९८. विभाषा कृञि
९९. लः[१३]परस्मैपदम्

---

**विमर्श**

१-इस समस्त सूत्र की अनुवृत्ति १।४।७२। तक जायेगी। २-इस सूत्र से 'विभाषा' की अनुवृत्ति १।४।७६। तक तथा 'कृञि' की अनुवृत्ति १।४।७९। तक जायेगी। ३-यहां से 'अनत्याध्याने' की अनुवृत्ति १।४।७६। तक जाती है। ४-यहां से 'नित्यम्' की अनुवृत्ति १।४।७९। तक जाती है। ५-इस सूत्र से 'ते धातोः' की अनूवृत्ति १।४।८२। तक जायेगी । ६-यहां से 'छन्दसि' की अनुवृत्ति १।४।८२। तक जायेगी। ७-इस सूत्र का अधिकार १।४।९८।तक जायेगा ८-यहां से 'अनुः' की अनुवृत्ति १।४।८६। तक जायेगी। ९-यहां से 'हीने' की अनुवृत्ति १।४।८७। तक जायेगी। १०-यहां से 'लक्षणेत्थं' भूताख्यान-भाग-वीप्सासु' की अनुवृत्ति १।४।९२। तक जाती है। ११-इस सूत्र से 'पूजायाम्' की अनुवृत्ति १।४।९५। तक जायेगी। १२-यहां से 'अधिः' की अनुवृत्ति १।४।९८। तक जाती है। १३-इस सूत्र में 'लः' पद में आदेश की अपेक्षा से षष्ठी है, अतः 'लस्य' (३।४।७७) से लकारों के स्थान में जो तिप्तस्झि (३।४।७८)सूत्र से आदेश होते हैं , उनका ग्रहण किया गया है। 'लटः शतृशानचाव' (३।२।१२४) से लट् के स्थान में शतृ, शानच् होते हैं। अतः शतृ की यहां परस्मैपद संज्ञा हो गयी है। 'क्वसुश्च' ३।२।१०७। से लृट् के स्थान में क्वसु आदेश हुआ है, अतः वह भी लादेश है।

१००. तङानावात्मनेपदम्[1]

१०१. तिङस्त्रीणि त्रीणि[2] प्रथममध्यमोत्तमाः

१०२. तान्येकवचनद्विवचनबहुवचनान्येकशः[3]

१०३. सुपः[4]

१०४. विभक्तिश्च

१०५. युष्मद्युपपदे समानाधिकरणे स्थानिन्यपि मध्यमः[5]

१०६. प्रहासे च मन्योपपदे मन्यतेरुत्तम एकवच्च

१०७. अस्मद्युत्तमः

१०८. शेषे प्रथमः

१०९. परः संनिकर्षः संहिता

११०. विरामोऽवसानम्

(आ कडाराद्बहुष्वनुप्रतिगृण ऊर्यादिच्छन्दसि तिङो दश।।)

इति पाणिनीयसूत्रपाठे प्रथमस्याध्यायस्य चतुर्थः पादः अध्यायश्च।



**विमर्श**

१-तङ् में 'त' से लेकर 'महिङ्' के ङकार पर्यन्त प्रत्याहार का ग्रहण है तथा आन से शानच्, कानच् का। यह पूर्व सूत्र का अपवाद है। २-इस सूत्र से 'तिङस्त्रीणि त्रीणि' पद की अनुवृत्ति १।४।१०४ तक जाती है। ३-यहां से 'एकवचनद्विवचनबहुवचनान्येकशः' की अनुवृत्ति १।४।१०३। तक जाती है। ४-इस समस्त सूत्र की अनुवृत्ति १।४।१०४। तक जाती है। ५-इस सूत्र से 'उपपदे समानाधिकरणे स्थानिन्यपि' की अनुवृत्ति १।४।१०८। तक तथा 'युष्मदि मध्यमः' की १।४।१०६। तक जाती है।

# अथ द्वितीयोऽध्यायः

## प्रथमः पादः

१. समर्थः पदविधिः
२. सुबा[१]मन्त्रिते पराङ्गवत्स्वरे
(वा०) षष्ठ्यामन्त्रितकारकवचनम्
(वा०) सुबन्तस्य पराङ्गवद्भावे समानाधिकरणस्योपंख्यानमनन्तरत्वात्।
(वा०) पूर्वाङ्गवच्चेति वक्तव्यम्।
(वा०) अव्ययानां न।
(वा०)अव्ययीभावस्य त्विष्यते।
३. प्राक्कडारात्समासः[२]
४. सह सुपा[३]
(वा०) इवेन समासो विभक्त्यलोपश्च
५. अव्ययीभावः[४]
६. [५]अव्ययं विभक्तिसमीपसमृद्धि-व्यृद्ध्यर्थाभावात्ययासंप्रतिशब्द-प्रादुर्भावपश्चाद्यथानुपूर्व्ययौगपद्य-सादृश्यसंपत्तिसाकल्यान्तवचनेषु
७. यथाऽसादृश्ये
८. यावदवधारणे
९. सुप्प्रतिना मात्रार्थे
१०. अक्षशलाकासंख्याः परिणा
११. विभाषा[६]
१२. अपपरिबहिरञ्चवः पञ्चम्या[७]
१३. आङ्मर्यादाभिविध्योः
१४. लक्षणे[८] नाभिप्रती आभिमुख्ये
१५. अनुर्य[९]त्समया
१६. यस्य चायामः
१७. तिष्ठद्गुप्रभृतीनि च

७. तिष्ठद्गु वहद्गु आयतीगवम् खलेयवम् खलेबुसम् लूनयवम् लूयमानयवम् पूतयवम् पूयमानयवम् संहृतयवम् संह्रियमाणयवम् संहृतबुसम् संह्रियमाणबुसम् समभूमि समपदाति सुषमम् विषमम् दुःषमम् निःषमम् अपसमम् आयतीसमम् (प्रोढम्) पापसमम् पुण्यसमम् प्राह्णम् प्ररथम् प्रमृगम् प्रदक्षिणम् (अपरदक्षिणम्) संप्रति असंप्रति। 'इच्प्रत्ययः समासान्तः' इति तिष्ठद्गुप्रभृतयः।।

---

**विमर्श**

१-इस सूत्र से 'सुप्' का अधिकार २।२।२९। तक जायेगा। २-'समासः' का अधिकार २।२।३८। तक जाता है। ३-इसका अधिकार २।२।२२। तक जानना चाहिए। ४-यह भी अधिकारसूत्र है। इसका अधिकार २।१।२१।तक समझना चाहिए। ५-इससूत्र से 'अव्ययम्' की अनुवृत्ति २।१।८। तक जाती है। ६-यहां से 'विभाषा' का अधिकार २।२।२९। तक जाता है। ७-'पञ्चम्या' की अनुवृत्ति २।१।१३। तक जाती है। ८-इस सूत्र से 'लक्षणेन' की अनुवृत्ति २।१।१६। तक जाती है। ९-यहां से 'अनुः' की अनुवृत्ति २।१।१६। तक जायेगी।

१८. पारे मध्ये षष्ठ्या वा

१९. संख्या[1]वंश्येन

२० नदीभिश्च[2]

२१. अन्यपदार्थे च संज्ञायाम्

२२. तत्पुरुषः[3]

२३. द्विगुश्च

२४. द्वितीया[4] श्रितातीतपतित-गतात्यस्तप्राप्तापन्नैः

(वा०) गम्यादीनामुपसंख्यानम्।

२५. स्वयं क्तेन[5]

२६. खट्वा क्षेपे

२७. सामि

२८. कालाः[6]

२९. अत्यन्तसंयोगे च

३०. तृतीया[7] तत्कृतार्थेन गुणवचनेन

३१. पूर्व–सदृश–समोनार्थ–कलह–निपुण–मिश्र–श्लक्ष्णैः

(वा०) अवरस्योपसंख्यानम्।

३२. कर्तृकरणे[8] कृता बहुलम्

३३. कृत्यैरधिकार्थवचने

३४. अन्नेन व्यञ्जनम्

३५. भक्ष्येण मिश्रीकरणम्

३६. चतुर्थी तदर्थार्थ–बलि–हित–सुख–रक्षितैः

(वा०) अर्थेन नित्यसमासो विशेष्य-लिङ्गता चेति वक्तव्यम्।

३७. पञ्चमी[9] भयेन

(वा०) भयभीतभीतिभीभिरिति वक्तव्यम्।

(वा०) भयनिर्गतजुगुप्सुभिरिति वक्तव्यम्।

३८.अपेतापोढमुक्तपतितापत्रस्तैरल्पशः

३९. स्तोकान्तिकदूरार्थकृच्छ्राणि क्तेन

४०. सप्तमी[10] शौण्डैः

८. शौण्ड धूर्त कितव व्याड प्रवीण संवीत अन्तर अधि पटु पण्डित कुशल चपल निपुण–इति शौण्डादयः।।

४१. सिद्धशुष्कपक्वबन्धैश्च

४२. ध्वाङ्क्षेण क्षेपे

४३. कृत्यैर्ऋणे

४४. संज्ञायाम्

४५. क्तेना[11]होरात्रावयवाः

४६. तत्र

---

**विमर्श**

१-इस सूत्र से 'संख्या' की अनुवृत्ति २।१।२०।तक जाती है। २-यहां से 'नदीभिः' की अनुवृत्ति २।१।२१।तक जाती है। ३-यह अधिकार और संज्ञा सूत्र है। यहां से २।२।२२। तक जो समास कहेंगें, उसकी तत्पुरुष संज्ञा जाननी चाहिए। ४-यहां से 'द्वितीया' की अनुवृत्ति २।१।२९।तक जाती है। ५-'क्तेन' की अनुवृत्ति २।१।२८। तक जाती है। ६-यहाँ से 'कालाः' की अनुवृत्ति २।१।२९। तक जायेगी। ७-'तृतीया' की अनुवृत्ति २।१।३५। तक जायेगी। ८-'कर्तृकरणे' की अनुवृत्ति २।१।३३। तक जाती है। ९-यहां से 'पञ्चमी' की अनुवृत्ति २।१।३९। तक जाती है। १०-इस सूत्र से 'सप्तमी' की अनुवृत्ति २।१।४८। तक जायेगी। ११-यहां से 'क्तेन' की अनुवृत्ति २।१।४७। तक जायेगी।

४७. क्षेपे[1]

४८. पात्रे समितादयश्च

९. पात्रेसमिताः पात्रेबहुलाः उदुम्बरमशकः (उदुम्बरमशकाः) उदुम्बरकृमिः कूपकच्छपः अवटकच्छपः कूपमण्डूकः कुम्भमण्डूकः उदपानमण्डूकः नगरकाकः नगरवायसः मातरिपुरुषः पिण्डीशूरः पितरिशूरः गेहेशूरः गेहेनर्दी गेहेक्ष्वेडी गेहेविजिती गेहेव्याडः गेहेमेही (गेहेदाही) गेहेदृप्तः गेहेधृष्टः गर्भेतृप्तः आखनिकबकः गोष्ठेशूरः गोष्ठेविजिती गोष्ठेक्ष्वेडी गोष्ठेपटुः गोष्ठेपण्डितः गोष्ठे-प्रगल्भः कर्णेटिरिटिरा कर्णेचुरुबुरा। आकृति-गणोऽयम् ।।इति पात्रेसमितादयः।।

४९. पूर्वकालैकसर्वजरत्पुराणनव-केवलाः समानाधिकरणेन[2]

५०. दिक्संख्ये[3] संज्ञायाम्

५१. तद्धितार्थोत्तरपदसमाहारे च

(वा०) द्वन्द्वतत्पुरुषयोरुत्तरपदे नित्यसमासवचनम्

(वा०) उत्तरपदेन परिमाणिना द्विगोः सिद्धये बहूनां तत्पुरुषस्यो-पंसख्यानम्।

५२. संख्यापूर्वो द्विगुः

५३. कुत्सितानि कुत्सनैः[4]

५४. पापाणके कुत्सितैः

५५. उपमानानि सामान्यवचनैः

५६. उपमितं व्याघ्रादिभिः सामान्याप्रयोगे

१०. व्याघ्र सिंह ऋक्ष ऋषभ चन्दन वृक बृष वराह हस्तिन् तरु कुञ्जर रुरु पृषत् पुण्डरीक पलाश कितव इति व्याघ्रादयः।। आकृतिगणोऽयम्। तेन–मुखपद्मम् मुखकमलम् करकिसलयम् पार्थिवचन्द्रः इत्यादि।

५७. विशेषणं विशेष्येण[5] बहुलम्

५८. पूर्वापरप्रथमचरमजघन्य-समानमध्यमध्यमवीराश्च

५९. श्रेण्यादयः कृतादिभिः

११. श्रेणि (ऊक) एक पूग कुन्दुम (मुकुन्द) (राशि) निचय (विशेष) निधन (विधान) (पर) इन्द्र देव मुण्ड भूत श्रमण वदान्य अध्यापक अभिरूपक ब्राह्मण क्षत्रिय (विशिष्ट) पटु पण्डित कुशल चपल निपुण कृपण इत्येते श्रेण्यादयः।।

१२. कृत मित मत भूत उक्त (युक्त )समाज्ञात समाम्नात समाख्यात संभावित (संसेवित) अवधारित अवकल्पित निराकृत उपकृत उपाकृत (दृष्ट कलित दलित उदाहृत विश्रुत उदित)–आकृतिगणोऽयम्।। इति कृतादयः।।

(वा०) श्रेण्यादिषु च्व्यर्थवचनम्।

६०. क्तेन नञ्विशिष्टेनानञ्

(वा०) शाकपार्थिवादीनां सिद्धये उत्तरपदलोपस्योपसंख्यानम्।

१३. (वा० १३१४)। शाकपार्थिव कुतप-सौश्रुत अजातौल्वलि–आकृतिगणोऽयम्।। कृतापकृत भुक्तविभुक्त पीतविपीत गतप्रत्यागत

**विमर्श**

१–इस सम्पूर्ण सूत्र की अनुवृत्ति २।१।४८। तक जायेगी। २-इस सूत्र से 'समानाधिकरणेन' की अनुवृत्ति पाद के अन्त २।१।७२। तक जाती है। ३-यहां से 'दिक्संख्ये' की अनुवृत्ति २।१।५१। तक जाती है। ४-यहां से 'कुत्सनैः' की अनुवृत्ति २।१।५४। तक जाती है। ५-यहां से 'विशेषणं विशेष्येण' की अनुवृत्ति २।१।५८। तक जायेगी।

यातानुयात क्रयाक्रयिका पुटापुटिका फलाफलिका (मानोन्मानिका) –इति शाकपार्थिवादयः।।

६१. सन्महत्परमोत्तमोत्कृष्टाः पूज्यमानैः

६२. बृन्दारकनागकुञ्जरैः पूज्यमानम्

६३. कतरकतमौ जातिपरिप्रश्ने

६४. किं क्षेपे

६५. पोटा–युवति–स्तोक–कतिपय–गृष्टि–धेनु–वशा–बेहद–बष्कयणी-प्रवक्तृ–श्रोत्रियाध्यापक–धूर्तैर्जातिः[१]

६६. प्रशंसावचनैश्च

६७. युवा खलतिपलितवलिनजरतीभिः

६८. कृत्यतुल्याख्या अजात्या

६९. वर्णो वर्णेन

७०. कुमारः श्रमणादिभिः

१४. श्रमणा प्रव्रजिता कुलटा गर्भिणी तापसी दासी बन्धकी अध्यापक अभिरूपक पण्डित पटु मृदु कुशल चपल निपुण-इति श्रमणादयः।।

७१. चतुष्पादो गर्भिण्या

(वा०) चतुष्पाज्जातिरिति वक्तव्यम्।

७२. मयूरव्यंसकादयश्च

१५. मयूरव्यंसक छात्रव्यंसक कम्बोजमुण्ड यवनमुण्ड छन्दसि। हस्तेगृह्य (हस्तगृह्य) पादेगृह्य (पादगृह्य) लाङ्गूलेगृह्य (लाङ्गूलगृह्य) पुनर्दाय। 'एहीडादयोऽन्यपदार्थे' १८। एहीडं वर्तते। एहियवं वर्तते। एहिवाणिजा क्रिया। अपेहिवाणिजा प्रेहिवाणिजा एहिस्वागता अपेहिस्वागता एहिद्वितीया अपेहिद्वितीया प्रेहिद्वितीया एहिकटा अपेहिकटा प्रेहिकटा आहरकटा प्रेहिकर्दमा प्रोहकर्दमा विधमचूडा उद्धमचूडा (उद्धरचूडा) आहरचेला आहरवसना (आहरसेना) आहरवनिता (आहरविनता) कृन्तविचक्षणा उद्धरोत्सृजा उद्धरावसृजा उद्धम-विधमा उत्पचनिपचा उत्पतनिपता उच्चावचम् उच्चनीचम् आचोपचम् आचपराचम् नखप्रचम् निश्चप्रचम् अकिञ्चन स्नात्वाकालक पीत्वास्थिरक भुक्त्वासुहित प्रोष्यपापीयान् उत्पत्यपाकला निपत्यरोहिणी निषण्णश्यामा अपेहिप्रघसा एहिविघसा इहपञ्चमी इहद्वितीया। 'जहि कर्मणा बहुलमाभीक्ष्ण्ये' १९.। कर्तारं चाभिदधाति। जहिजोडः (जहिजोडम्) जहिस्तम्बम् (जहिस्तम्बः) (उज्जहिस्तम्बम्)। 'आख्यातमाख्यातेन क्रियासातत्ये' २०। अश्नीतपिबता पचतभृज्जता खादतमोदता खादतवमता (खादताचमता) आहरनिवपा आहरनिष्किरा (आवपनिष्किरा) उत्पचविपचा भिन्धिलवणा कृन्धिविचक्षणा पचलवणा पचप्रकूटा–आकृतिगणोऽयम्। तेन अकुतोभयः कान्दिशीकः (कान्देशीकः) आहोपुरुषा आहोपुरुषिका अहमहमिका यदृच्छा एहिरेयाहिरा उन्मृजावमृजा द्रव्यान्तरम् अवश्यकार्यम्।। इति मयूरव्यंसकादयः।।

(समर्थोऽन्यपदार्थे च सिद्धशुष्कसन्महद्द्वादश।)

इति पाणिनीयसूत्रपाठे द्वितीयस्याध्यायस्य प्रथमः पादः।



**विमर्श**

१-इस सूत्र से 'जातिः' की अनुवृत्ति २।१।६६। तक जाती है।

## द्वितीयः पादः

१. पूर्वापराधरोत्तरमेकदेशिनैकाधि-करणे[१]

२. अर्धं नपुंसकम्

३. द्वितीयतृतीयचतुर्थतुर्याण्यन्य-तरस्याम्[२]

४. प्राप्तापन्ने च द्वितीयया

५. कालाः परिमाणिना

६. नञ्

७. ईषदकृता

(वा०) ईषद्गुणवचनेनेति वक्तव्यम्।

८. षष्ठी[३]

(वा०) कृद्योगा च षष्ठी समस्यत इति वक्तव्यम्

९. याजकादिभिश्च

१६. याजक पूजक परिचारक परिवेषक (परिषेचक) स्नापक अध्यापक उत्साहक उद्वर्तक होतृ भर्तृ रथगणक पत्तिगणक–इति याजकादयः।।

१०. न[४] निर्धारणे

(वा०) प्रतिपदविधाना च षष्ठी न समस्यत इति वक्तव्यम् ।

११. पूरणगुणसुहितार्थसदव्ययतव्य-समानाधिकरणेन

१२. क्तेन[५] च पूजायाम्

१३. अधिकरणवाचिना च

१४. कर्मणि च

१५. तृजकाभ्यां[६] कर्तरि

१६. कर्तरि च

१७. नित्यं[७] क्रीडाजीविकयोः

१८. कुगतिप्रादयः

(वा०) कर्मप्रवचनीयानां प्रतिषेधः।

(वा०) प्रादयो गताद्यर्थे प्रथमया।

(वा०) अत्यादयः क्रान्ताद्यर्थे द्वितीयया।

(वा०) अवादयः क्रुष्टाद्यर्थे तृतीयया।

(वा०) पर्यादयो ग्लानाद्यर्थे चतुर्थ्या।

(वा०) निरादयः क्रान्ताद्यर्थे पञ्चम्या।

(वा०) इवेन विभक्त्यलोपः पूर्वपद-प्रकृतिस्वरत्वं च।

१९. उपपदम[८]तिङ्

२०. अमैवाव्ययेन[९]

---

**विमर्श**

१-इस सूत्र से 'एकदेशिनैकाधिकरणे' की अनुवृत्ति २।२।३। तक जायेगी। २-यहां से 'अन्यतरस्याम्' की अनुवृत्ति २।२।४। तक जाती है। ३-इस समस्त सूत्र की अनुवृत्ति २।२।१७। तक जाती है। ४-यहां से 'न' की अनुवृत्ति २।२।१६। तक जायेगी। ५-इस सूत्र से 'क्तेन' की अनुवृत्ति २।२।१३। तक जायेगी। ६-यहां से 'तृजकाभ्याम्' की अनुवृत्ति २।२।१७। तक जायेगी। ७-इस सूत्र से 'नित्यम्' की अनुवृत्ति २।२।१९। तक जाती है। ८-यहां से 'उपपदम्' की अनुवृत्ति २।२।२२। तक जायेगी। ९-इस निखिल सूत्र की अनुवृत्ति २।२।२१। तक जाती है।

२१. तृतीयाप्रभृतीन्यन्यतरस्याम्[१]

२२. क्त्वा च

२३. शेषो बहुव्रीहिः[२]

२४. अनेक[३]मन्यपदार्थे

(वा०) प्रादिभ्यो धातुजस्य वाच्यो वा चोत्तरपदलोपः।

(वा०) नञोऽस्त्यर्थानां वाच्यो वा चोत्तरपदलोपः।

२५. संख्ययाव्ययासन्नादूराधिकसंख्याः संख्येये

२६. दिङ्नामान्यन्तराले

२७. तत्र तेनेदमिति सरूपे

२८. तेन सहेति तुल्ययोगे

(वा०) सर्वनाम्नो वृत्तिमात्रे पुंवद्भावो वक्तव्यः।

२९. चार्थे द्वन्द्वः

३०. उपसर्जनं पूर्वम्[४]

३१.राजदन्तादिषु परम्

१७. राजदन्तः अग्रेवणम् लिप्तवासितम् नग्नमुषितम् सिक्तसंमृष्टम् मृष्टलुञ्चितम् अवक्लिन्नपक्वम् अर्पितोप्तम् उप्तगाढम् उलूखलमुसलम् तण्डुलकिण्वम् दृषदुपलम् आरड्वायनि (आरग्वायनबन्धकी) चित्ररथबाह्लीकं अवन्त्यश्मकं शूद्रार्यं स्नातकराजानौ विष्वक्सेनार्जुनौ अक्षिभ्रुवम् दारगवम् शब्दार्थौ धर्मार्थौ कामार्थौ अर्थशब्दौ अर्थधर्मौ अर्थकामौ बैकारिमतं गाजवाजम् (गोजवाजं) गोपालधानिपूलासम् (गोपालधानी-पूलासम्) पूलासकारण्डं (पूलासककुरण्डम्) स्थूलासम् (स्थूलपूलासम्) उशीरबीजं (जिज्ञास्थि) सिञ्जास्थम् (सिञ्जाश्वत्थं) चित्र-स्वाती (चित्रास्वाती) भार्यापती दम्पती जम्पती जायापती पुत्रपती पुत्रपशू केशश्मश्रू शिरोबीजु (शिरोबीजम्) शिरोजानु सर्पिर्मधुनी मधुसर्पिषी (आद्यन्तौ) अन्तादी गुणवृद्धी वृद्धिगुणौ– इति राजदन्तादयः।।

३२. द्वन्द्वे[५] घि

३३. अजाद्यदन्तम्

३४. अल्पाच्तरम्

(वा०) अनेकप्राप्तावेकस्य नियमोऽनियमः शेषे।

(वा०) ऋतुनक्षत्राणामानुपूर्व्येण समानाक्षराणाम्।

(वा०) अभ्यर्हितं च।

(वा०) लघ्वक्षरम् ।

(वा०) वर्णानामानुपूर्व्येण।

(वा०) भ्रातुश्च ज्यायसः।

(वा०) संख्याया अल्पीयस्याः।

(वा०) धर्मादिषूभयम्।

३५. सप्तमीविशेषणे बहुव्रीहौ[६]

---

**विमर्श**

१-इस सम्पूर्ण सूत्र की अनुवृत्ति २।२।२२। तक जाती है। २-इस सूत्र से 'बहुव्रीहिः' का अधिकार २।२।२८। तक समझना चाहिए। ३-यहाँ से 'अनेकम्' की अनुवृत्ति २।२।२९। तक जायेगी । ४-इस सूत्र से 'उपसर्जनम्' की अनुवृत्ति २।२।३१। तक तथा 'पूर्वम्' की अनुवृत्ति २।३।३८। तक जायेगी। ५-इस सूत्र से 'द्वन्द्वे' की अनुवृत्ति २।२।३४। तक जाती है। ६-यहां से 'बहुव्रीहौ' की अनुवृत्ति २।२।३७। तक जायेगी।

(वा०) सर्वनामसंख्ययोरुपसंख्यानम्।

(वा०) वा प्रियस्य।

(वा०) गड्वादिभ्यः परा सप्तमी।

३६. निष्ठा[1]

(वा०) जातिकालसुखादिभ्यः परा निष्ठा।

(वा०) प्रहरणार्थेभ्यश्च परे निष्ठा-सप्तम्यौ।

३७. वा[2]ऽऽहिताग्न्यादिषु

१८. आहिताग्नि जातपुत्र जातदन्त जातश्मश्रु तैलपीत घृतपीत (मद्यपीत) ऊढभार्य गतार्थ- आकृतिगणोऽयम्।। तेन। गडुकण्ठ अस्युद्यत (अरभुद्यत) दण्डपाणि-भृतयोऽपि।। इत्याहिताग्न्यादयः।।

३८. कडाराः कर्मधारये

१९. कडार गडुल खञ्ज खोड काण कुण्ठ खलति गौर वृद्ध भिक्षुक पिङ्ग पिङ्गल (पिङ्गल) तड तनु (जठर) बधिर मठर कञ्ज बर्बर - इति कडारादयः।।

(पूर्वापराधरोत्तरं तृतीयाप्रभृतीन्यष्टादश।)

इति पाणिनीयसूत्रपाठे द्वितीयस्याध्यायस्य द्वितीयः पादः।



**विमर्श**

१-इस सम्पूर्ण सूत्र की अनुवृत्ति २।२।३७। तक जायेगी। २-यहां से 'वा' की अनुवृत्ति २।२।३८। तक जाती है।

## तृतीयः पादः

१. अनभिहिते[१]
(वा०) तिङ्कृत्तद्धितसमासैः परि-
संख्यानम्।
२. कर्मणि द्वितीया[२]
(वा०) उभसर्वतसोः कार्या धिगुपर्यादिषु
त्रिषु। द्वितीयाम्रेडितान्तेषु
ततोऽन्यत्रापि दृश्यते।।
(वा०) अभितः परितः समया-
निकषाहाप्रतियोगेऽपि।
३. तृतीया च होश्छन्दसि
४. अन्तरान्तरेण युक्ते
५. कालाध्वनोरत्यन्तसंयोगे[३]
६. अपवर्गे तृतीया
७. सप्तमीपञ्चम्यौ कारकमध्ये
८. कर्मप्रवचनीययुक्ते[४] द्वितीया
९. यस्मादधिकं यस्य चेश्वरवचनं तत्र
सप्तमी
१०. पञ्चम्य[५]पाङ्परिभिः
११. प्रतिनिधिप्रतिदाने च यस्मात्
१२. गत्यर्थकर्मणि द्वितीयाचतुर्थ्यौ
चेष्टायामनध्वनि
१३. चतुर्थी[६] संप्रदाने
(वा०) तादर्थ्ये चतुर्थी वक्तव्या।
(वा०) क्लृपि संपद्यमाने च।
(वा०) उत्पातेन ज्ञापिते च।
(वा०) हितयोगे च
१४. क्रियार्थोपपदस्य च कर्मणि
स्थानिनः[७]
१५. तुमर्थाच्च भाववचनात्
१६. नमः स्वस्तिस्वाहास्वधालंवषड्-
योगाच्च
(वा०) अलमिति पर्याप्त्यर्थग्रहणम्।
१७. मन्यकर्मण्यनादरे विभाषाऽप्राणिषु
(वा०) अप्राणिष्वित्यपनीय नौकाकान्न-
शुकसृगालवर्जेष्विति वाच्यम्।
२०. नौ काक अन्न शुक शृगाल–इति
नावादयः।।
१८. कर्तृकरणयोस्तृतीया[८]
(वा०) प्रकृत्यादिभ्य उपसंख्यानम् ।
२१. ( वा० १४६८ )। प्रकृति प्राय गोत्र
सम विषम द्विद्रोण पञ्चक साहस्र – इति
प्रकृत्यादयः।।
१९. सहयुक्तेऽप्रधाने
२०. येनाङ्गविकारः
२१. इत्थंभूतलक्षणे

---

**विमर्श**

१-इस समस्त सूत्र का अधिकार पाद के अन्त २।३।७३। तक जाता है। २-इस सूत्र से 'द्वितीया' की अनुवृत्ति २।३।५। तक तथा 'कर्मणि' की अनुवृत्ति २।३।३। तक जायेगी। ३-यहां से 'कालाध्वनोः' की अनुवृत्ति २।३।७। तक तथा 'अत्यन्तसंयोगे' की अनुवृत्ति २।३।६। तक जायेगी। ४-इस सूत्र से 'कर्मप्रवचनीययुक्ते' की अनुवृत्ति २।३।११। तक जाती है। ५- यहाँ से 'पंचमी' की अनुवृत्ति २।३।११। तक जायेगी। ६-यहां से 'चतुर्थी' की अनुवृत्ति २।३।१७। तक जाती है। ७-इस समस्त सूत्र की अनुवृत्ति २।३।१५। तक जाती है। ८-इस सूत्र से 'तृतीया' की अनुवृत्ति २।३।२५। तक जाती है।

२२. संज्ञोऽन्यतरस्यां कर्मणि
२३. हेतौ[१]
(वा०) निमित्तपर्यायप्रयोगे सर्वासां प्रायदर्शनम्।
२४. अकर्तर्यृणे पञ्चमी[२]
२५. विभाषा गुणेऽस्त्रियाम्
२६. षष्ठी हेतुप्रयोगे[३]
२७. सर्वनाम्नस्तृतीया च
२८. अपादाने पञ्चमी[४]
(वा०) ल्यब्लोपे कर्मण्यधिकरणे च
(वा०) यतश्चाध्वकालनिमानं तत्र पञ्चमी तद्युक्तादध्वनः प्रथमासप्तम्यौ कालात्सप्तमी च वक्तव्या।
२९. अन्यारादितरर्ते दिक्छब्दाञ्चूत्तरपदाजाहियुक्ते
३०. षष्ठ्यतसर्थ[५]प्रत्ययेन
३१. एनपा द्वितीया[६]
३२. पृथग्विनानानाभिस्तृतीया[७]ऽन्यतरस्याम्
३३. करणे च स्तोकाल्पकृच्छ्रकतिपयस्यासत्त्ववचनस्य
३४. दूरान्तिकार्थैः[८] षष्ठ्यन्यतरस्याम्[९]
३५. दूरान्तिकार्थेभ्यो द्वितीया च
३६. सप्तम्य[१०]धिकरणे च
(वा०) क्तस्येन्विषयस्य कर्मण्युपसंख्यानम्।
(वा०) साध्वसाधुप्रयोगे च।
(वा०) अर्हाणां कर्तृत्वेऽनर्हाणामकर्तृत्वे तद्वैपरीत्ये च।
(वा०) निमित्तात्कर्मसंयोगे।
३७. यस्य च भावेन भावलक्षणम्[११]
३८. षष्ठी[१२] चानादरे
३९. स्वामीश्वराधिपतिदायादसाक्षिप्रतिभूप्रसूतैश्च
४०. आयुक्तकुशलाभ्यां चासेवायाम्
४१. यतश्च निर्धारणम्[१३]
४२. पञ्चमी विभक्ते
४३. साधुनिपुणाभ्यामर्चायां सप्तम्य[१४]प्रतेः
(वा०) अप्रत्यादिभिरिति वक्तव्यम्।

---

**विमर्श**

१-इस समस्त सूत्र की अनुवृत्ति २।३।२७। तक जाती है। २-यहां से 'पञ्चमी' की अनुवृत्ति २।३।२५। तक जायेगी। ३-इस निखिल सूत्र की अनुवृत्ति २।३।२७। तक जायेगी। ४-यहां से 'पञ्चमी' की अनुवृत्ति २।३।३५।तक जाती है। ५-अतसुच् के अर्थ में विहित, 'दक्षिणोत्तराभ्यामतसुच्' (५।३।२८।) के अधिकार में कहे हुए प्रत्यय अतसर्थ प्रत्यय कहलाते हैं। ६-इस सूत्र से 'द्वितीया' की अनुवृत्ति २।३।३२। तक जाती है। ७-यहां से 'तृतीया' की अनुवृत्ति २।३।३३। तक जायेगी। ८-यहां से 'षष्ठ्यन्यतरस्याम्' की अनुवृत्ति २।३।३५। तक जायेगी। ९-यहां से 'दूरान्तिकार्थेभ्यः' की अनुवृत्ति २।३।३६। तक जाती है। १०-इस सूत्र से 'सप्तमी' की अनुवृत्ति २।३।४१। तक जायेगी। ११-इस सम्पूर्ण सूत्र की अनुवृत्ति २।३।३८। तक जायेगी। १२-यहां से 'षष्ठी' की अनुवृत्ति २।३।४१। तक जायेगी। १३-इस निखिल सूत्र की अनुवृत्ति २।३।४२। तक जाती है। १४-यहां से 'सप्तमी' की अनुवृत्ति २।३।४५।तक जायेगी।

२२. प्रति-परि-अनु-एते प्रत्यादयः।
४४. प्रसितोत्सुकाभ्यां तृतीया[१] च
४५. नक्षत्रे च लुपि
४६. प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा[२]
४७. संबोधने च[३]
४८. सामन्त्रितम्
४९. एकवचनं संबुद्धिः
५०. षष्ठी शेषे[४]
५१. ज्ञोऽविदर्थस्य करणे
५२. अधीगर्थदयेशां कर्मणि[५]
५३. कृञः प्रतियत्ने
५४. रुजार्थानां भाववचनानामज्वरेः
(वा०) अज्वरिसन्ताप्योरिति वक्तव्यम्।
५५. आशिषि नाथः
५६. जासिनिप्रहणनाटक्राथपिषां हिंसायाम्
५७. व्यवहृपणोः[६] समर्थयोः
५८. दिवस्तदर्थस्य[७]
५९. विभाषोपसर्गे
६०. द्वितीया ब्राह्मणे
६१. प्रेष्यब्रुवोर्हविषो देवतासंप्रदाने
(वा०) हविषोऽप्रस्थितस्य।
६२. चतुर्थ्यर्थे बहुलं छन्दसि[८]
(वा०) षष्ठ्यर्थे चतुर्थी।
६३. यजेश्च करणे
६४. कृत्वोऽर्थप्रयोगे कालेऽधिकरणे
६५. कर्तृकर्मणोः कृति
(वा०) गुणकर्मणि वेष्यते।
६६. उभयप्राप्तौ कर्मणि
(वा०) स्त्रीप्रत्यययोरकाकारयोर्नायं नियमः।
(वा०) शेषे विभाषा।
६७. क्तस्य[९] च वर्तमाने
६८. अधिकरणवाचिनश्च
६९. न[१०] लोकाव्ययनिष्ठाखलर्थतृनाम्
(वा०) उकप्रतिषेधे कमेर्भाषायामप्रतिषेधः
(वा०) अव्ययप्रतिषेधे तोसुन्कसुनोरप्रतिषेधः।
(वा०) द्विषः शतुर्वा।
७०. अकेनोर्भविष्यदाधमर्ण्ययोः

---

**विमर्श**

१-इस सूत्र से 'तृतीया' की अनुवृत्ति २।३।४५। तक जाती है। २-यहां से 'प्रथमा' की अनुवृत्ति २।३।४९। तक जायेगी। ३-इस समस्त सूत्र की अनुवृत्ति २।३।४९। तक जायेगी। ४-इस सम्पूर्ण सूत्र की अनुवृत्ति पाद के अन्त २।३।७३। तक जायेगी। यहां ज्ञातव्य है कि जिन–जिन सूत्रो मे 'शेषे' अधिकार लगेगा, वहां 'अनभिहिते' का अधिकार नहीं लगेगा। ५-यहां से 'कर्मणि' की अनुवृत्ति २।३।६१। तक जायेगी। ६-यहां से 'व्यवहृपणोः' की अनुवृत्ति २।३।५८। तक जायेगी। ७-इस निखिल सूत्र की अनुवृत्ति २।३।६०। तक जायेगी। ८-इस सूत्र से 'बहुलं छन्दसि' की अनुवृत्ति २।३।६३। तक जायेगी। ९-यहां से 'क्तस्य' की अनुवृत्ति २।३।६८। तक जायेगी। १०-यहां से 'न' की अनुवृत्ति २।३।७०। तक जाती है।

७१. कृत्यानां कर्तरि वा

७२. तुल्यार्थैरतुलोपमाभ्यां तृतीयान्यतरस्याम्[१]

७३. चतुर्थी चाशिष्यायुष्यमद्रभद्रकुशलसुखार्थहितैः

(अनभिहित इत्थंभूतयतश्च प्रेष्यब्रुवोस्त्रयोदश।)

इति पाणिनीयसूत्रपाठे द्वितीयस्याध्यायस्य तृतीयः पादः।



---

**विमर्श**

१ १-यहां से 'अन्यतरस्याम्' की अनुवृत्ति २।३।७३। तक जायेगी।

## चतुर्थः पादः

१. द्विगुरेकवचनम्[1]
२. द्वन्द्वश्च[2] प्राणितूर्यसेनाङ्गानाम्
३. अनुवादे चरणानाम्
(वा०) स्थेणोर्लुङीति वक्तव्यम्।
४. अध्वर्युक्रतुरनपुंसकम्
५. अध्ययनतोऽविप्रकृष्टाख्यानाम्
६. जातिरप्राणिनाम्
७. विशिष्टलिङ्गो नदीदेशोऽग्रामाः
८. क्षुद्रजन्तवः
९. येषां च विरोधः शाश्वतिकः
१०. शूद्राणामनिरवसितानाम्
११. गवाश्वप्रभृतीनि च

२३. गवाश्वम् गवाविकम् गवैडकम् अजाविकम् (अजैडकम्) कुब्जवामनम् कुब्जकिरातम् पुत्रपौत्रम् श्वचण्डालम् स्त्रीकुमारम् दासीमाणवकम् शाटीपटीरम् शाटीप्रच्छदम् शाटीपट्टिकम् उष्ट्रखरम् उष्ट्रशशम् मूत्रशकृत् मूत्रपुरीषम् यकृन्मेदः मांसशोणितम् दर्भशरम् दर्भपूतीकम् अर्जुनशिरीषम् अर्जुनपुरुषम् तृणोपलम् (तृणोलपम्) दासीदासम् कुटाकुटम् भागवती-भागवतम्। इति गवाश्वप्रभृतीनि।।

१२. विभाषा[3] वृक्षमृगतृणधान्यव्यञ्जनपशुशकुन्यश्वबडवपूर्वापराधरोत्तराणाम्
(वा०) बहुप्रकृतिः फलसेनावनस्पतिमृगशकुनिक्षुद्रजन्तुधान्यतृणानाम्।
१३. विप्रतिषिद्धं चानधिकरणवाचि
१४. न[4] दधिपयआदीनि

२४. दधिपयसी सर्पिर्मधुनी मधुसर्पिषी ब्रह्माप्रजापती शिववैश्रवणौ स्कन्दविशाखौ परिव्राजककौशिकौ (परिव्राट्कौशिकौ) प्रवर्ग्योपसदौ शुक्लकृष्णौ इध्माबर्हिषी दीक्षातपसी (श्रद्धातपसी मेधातपसी) अध्ययनतपसी उलूखलमुसले आद्यवसाने श्रद्धामेधे ऋक्सामे वाङ्मनसे–इति दधिपयआदीनि।।

१५. अधिकरणैतावत्त्वे[5] च
१६. विभाषा समीपे
१७. स नपुंसकम्[6]
१८. अव्ययीभावश्च
१९. तत्पुरुषोऽनञ्कर्मधारयः[7]
२०. संज्ञायां कन्थोशीनरेषु
२१. उपज्ञोपक्रमं तदाद्याचिख्यासायाम्
२२. छाया बाहुल्ये
२३. सभा[8] राजाऽमनुष्यपूर्वा
२४. अशाला च
२५. विभाषा सेनासुराच्छायाशालानिशानाम्

---

**विमर्श**

१-इस सूत्र से 'एकवचनम्' की अनुवृत्ति २।४।१७। तक जायेगी। २-यहां से 'द्वन्द्वः' की अनुवृत्ति २।४।१६। तक जायेगी। ३-यहां से 'विभाषा' की अनुवृत्ति २।४।१३। तक जाती है। ४-यहां से 'न' की अनुवृत्ति २।४।१५। तक जाती है। ५-इस सूत्र से 'अधिकरणैतावत्त्वे' की अनुवृत्ति २।४।१६। तक जाती है। ६-यहां से 'नपुंसकम्' की अनुवृत्ति २।४।२५। तक जायेगी। ७-इस सूत्र का अधिकार २।४।२५। तक समझना चाहिए। ८-यहां से 'सभा' की अनुवृत्ति २।४।२४। तक जाती है।

२६. परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः

(वा०) द्विगुप्राप्तापन्नालंपूर्वगतिसमासेषु प्रतिषेधो वक्तव्यः।

२७. पूर्व[1]वदश्वबडवौ

२८. हेमन्तशिशिरावहोरात्रे च छन्दसि

२९. रात्राह्नाहाः पुंसि

(वा०) अनुवाकादयः पुंसि।

(वा०) संख्यापूर्वं रात्रं क्लीबम्।

३०. अपथं नपुंसकम्[2]

(वा०) पुण्यसुदिनाभ्यामह्नः क्लीबतेष्टा

(वा०) पथः संख्याव्ययादेः।

(वा०) अकारान्तोत्तरपदो द्विगुः स्त्रियामिष्टः।

(वा०) आबन्तो वा।

(वा०) अनो नलोपश्च वा द्विगुः स्त्रियाम्।

(वा०) पात्राद्यन्तस्य न।

(वा०) सामान्ये नपुंसकम्।

३१. अर्धर्चाः पुंसि च

२५. अर्धर्च गोमय कषाय कार्षापण कुतप कुसप (कुणप) कपाट शङ्ख गूथ यूथ ध्वज कबन्ध पद्म गृह सरक कंस दिवस यूष अन्धकार दण्ड कमण्डलु मण्ड भूत द्वीप द्यूत चक्र धर्म कर्मन् मोदक शतमान यान नख नखर चरण पुच्छ दाडिम हिम रजत सक्तु पिधान सार पात्र घृत सैन्धव औषध आढक चषक द्रोण खलीन पात्रीव षष्टिक वारबाण (वारवारण) प्रोथ कपित्थ [शुष्क] शाल शील शुक्ल (शुल्क) शीधु कवच रेणु (ऋण) कपट शीकर मुसल सुवर्ण वर्ण पूर्व चमस क्षीर कर्ष आकाश अष्टापद मङ्गल निधन निर्यास जृम्भ वृत्त पुस्त बुस्त क्ष्वेडित शृङ्ग निगड (खल) मूलक मधु मूल स्थूल शराव नाल वप्र विमान मुख प्रग्रीव शूल वज्र कटक कण्टक (कर्पट) शिखर कल्क (वल्कल) नटमक (नाटमस्तक) वलय कुसुम तृण पङ्क कुण्डल किरीट (कुमुद) अर्बुद अङ्कुश तिमिर आश्रय भूषण इक्कस (इष्वास) मुकुल वसन्त तटाक (तडाग) पिटक विटङ्क विडङ्ग पिण्याक माष कोश फलक दिन दैवत पिनाक समर स्थाणु अनीक उपवास शाक कर्पास (विशाल) चषाल (चखाल) खण्ड दर विटप (रण बल मक) मृणाल हस्त आर्द्र हल (सूत्र) ताण्डव गाण्डीव मण्डप पटह सौध योध पार्श्व शरीर फल (छल) पुर (पुरा ) राष्ट्र अम्बर बिम्ब कुट्टिम मण्डल (कुक्कुट) कुडप ककुद खन्डल तोमर तोरण मञ्चक पञ्चक पुङ्ख मध्य (बाल) छाल वल्मीक वर्ष वस्त्र वसु देह उद्यान उद्योग स्नेह स्तेन (स्तन स्वर) संगम निष्क क्षेम शूक क्षत्र पवित्र (यौवन कलह) मालक (पालक) मूषिक (मण्डल वल्कल) कुज (कुञ्ज) विहार लोहित विषाण भवन अरण्य पुलिन दृढ आसन ऐरावत तीर्थ लोमन (लोमश) तमाल लोह दण्डक शपथ प्रतिसर दारु धनुस् मान वर्चस्क कूर्च तण्डक मठ सहस्र ओदन प्रवाल शकट अपराह्ण नीड शकल तण्डुल–इत्यर्धर्चादिः।।

३२. इदमोऽन्वादेशेऽशनुदात्त[3]स्तृतीयादौ

---

**विमर्श**

१-यहां से 'पूर्ववत्' की अनुवृत्ति २।४।२८। तक जाती है। २-यहां से 'नपुंसकम्' की अनुवृत्ति २।४।३१। तक जायेगी। ३-इस सूत्र से 'इदमोऽन्वादेशे' और 'अनुदात्तः' की अनुवृत्ति २।४।३४। तक तथा 'अश्' की अनुवृत्ति २।४।३३। तक जायेगी।

३३. एतदस्त्र[१]-तसोस्त्र-तसौ-चानुदात्तौ
३४. द्वितीयाटौस्स्वेनः
(वा०) अन्वादेशे नपुंसके एनद्वक्तव्यः
३५. आर्धधातुके[२]
३६. अदो[३]जग्धिर्ल्यप्ति किति
३७. लुङ्सनोर्घस्लृ
(वा०) घस्लृ भावेऽच्युपसंख्यानम्।
३८. घञपो[४]श्च
३९. बहुलं छन्दसि
४०. लिट्यन्यतरस्याम्[५]
४१. वेञो वयिः
४२. हनो वध[६]लिङि
४३. लुङि[७] च
४४. आत्मनेपदेष्वन्यतरस्याम्
४५. इणो[८] गा लुङि
(वा०) इण्वदिक इति वक्तव्यम्।
४६. णौ गमिरबोधने[९]
४७. सनि[१०] च
४८. इङ[११]श्च
४९. गाङ्[१२] लिटि
५०. विभाषा[१३] लुङ्लृङोः
५१. णौ च संश्चङोः
५२. अस्तेर्भूः
५३. ब्रुवो वचिः
५४. चक्षिङः ख्याञ्[१४]
(वा०) वर्जने प्रतिषेधः।
(वा०) असनयोश्च।
५५. वा[१५] लिटि
५६. अजे[१६]र्व्यघञपोः
(वा०) घञपोः प्रतिषेधे क्य उपसंख्यानम्
(वा०) वलादावार्धधातुके वेष्यते।
५७. वा यौ
५८. ण्य-क्षत्रिया-ऽऽर्ष-ञितो यूनि लुग[१७]णिञोः

---

**विमर्श**

१-यहां से 'एतदः' की अनुवृत्ति २।४।३४। तक जाती है। २-इस सूत्र का अधिकार २।४।५७। तक जानना चाहिए। ३-यहां से 'अदः' की अनुवृत्ति २।४।४०। तक जायेगी। ४-यहां से 'घञपोः' की अनुवृत्ति २।४।३९। तक जाती है। ५-इस समस्त सूत्र की अनुवृत्ति २।४।४१। तक जायेगी। ६-यहां से 'हनो वध' की अनुवृत्ति २।४।४४। तक जाती है। ७-यहां से 'लुङि' की अनुवृत्ति २।४।४४। तक जायेगी। ८-यहां से 'इणः' की अनुवृत्ति २।४।४७। तक जाती है। ९-इस सूत्र से 'गमिः' की अनुवृत्ति २।४।४८। तक तथा 'अबोधने' की अनुवृत्ति २।४।४७। तक जायेगी। १०-यहां से सनि की अनुवृत्ति २।४।४८। तक जायेगी। ११-इस सूत्र से 'इङः' की अनुवृत्ति २।४।५१। तक जायगी। १२-यहां से 'गाङ्' की अनुवृत्ति २।४।५१। तक जाती है। १३-यहां से 'विभाषा' की अनुवृत्ति २।४।५१। तक जायेगी। १४-इस समस्त सूत्र की अनुवृत्ति २।४।५५। तक जाती है। १५-यहां से 'वा' की अनुवृत्ति २।४।५६। तक जाती है। १६-यहां से 'अजेः' की अनुवृत्ति २।४।५७। तक जायेगी।१७-इस सूत्र से 'यूनि' की अनुवृत्ति २।४।६१। तक तथा 'लुक्' की अनुवृत्ति २।४।८३। तक जाती है।

५९. पैलादिभ्यश्च

२६. पैल शालङ्कि सात्यकि सात्यंकामि राहवि रावणि औदञ्चि औदव्रजि औदमेघि औदव्यज्रि (औदमज्जि) औदभृज्जि दैवस्थानि पैङ्गलौदायनि राहक्षति (राह क्षति) भौलिङ्गि राणि औदन्यि औद्राहमानि औज्जिहानि औदशुद्धि 'तद्राजाच्चाणः' (तद्राज) आकृतिगणोऽयम् इति पैलादिः।।

६०. इञः प्राचाम्

६१. न तौल्वलिभ्यः

२७. तौल्वलि धारणि पारणि रावणि दैलीपि दैवति वार्कलि नैवति (नैवकि) दैवमित्रि (दैवमति) दैवयज्ञि चाफट्ठकि बैल्वकि वैकि (वैङ्कि) आनुहारति (आनुराहति) पौष्करसादि आनुरोहति आनुति प्रादोहनि नैमिश्रि प्राडाहति बान्धकि वैशीति आसिनासि आहिंसि आसुरि नैमिषि आसिबन्धकि पौष्पि कारेणुपालि बैकर्णि वैरकि वैहति–इति तौल्वल्यादिः।।

६२. तद्राजस्य बहुषु तेनैवास्त्रियाम्[१]

६३. यस्कादिभ्यो गोत्रे[२]

२८. यस्क लह्य द्रुह्य अयस्थूण (अयःस्थूण) तृणकर्ण सदामत्त कम्बलहार बहिर्योग कर्णाढक पर्णाढक पिण्डीजङ्घ बकसस्थ (बकसक्थ) विश्रि कुद्रि अजबस्ति मित्रयु रक्षोमुख जङ्घारथ उत्कास कटुक मथक (मन्थक) पुष्करट् (पुष्करसद्) विषपुट उपरिमेखल क्रोष्टुकमान (क्रोष्टुमान) क्रोष्टुपाद क्रोष्टुमाय शीर्षमाय खरप पदक वर्षुक भलन्दन भडिल भण्डिल भण्डित–एते यस्कादयः।।

६४. यञञोश्च

(वा०) यञादीनामेकस्य द्वयोर्वा तत्पुरुषे षष्ठ्या उपसंख्यानम्।

६५. अत्रिभृगुकुत्सवसिष्ठगोतमाङ्गिरोभ्यश्च

६६. बह्वच इञः प्राच्यभरतेषु

६७. न गोपवनादिभ्यः

२९. गोपवन शेयु (शिग्रु) बिन्दु भाजन अश्वावतान, श्यामाक (श्योमाक) श्यामक श्यापर्ण–बिदाद्यन्तर्गणोऽयं गोपवनादिः।।

६८. तिककितवादिभ्यो द्वन्द्वे

३०. तिककितवाः वङ्खभण्डीरथाः उपकलमकाः पफकनरकाः बकनखगुदपरिणद्धाः उब्जककुभाः लङ्कशान्तमुखाः उत्तरशलङ्कटाः कृष्णाजिनकृष्णसुन्दराः भ्रष्टककपिष्ठलाः अग्निवेशदशेरुकाः–एते तिककितवादयः।।

६९. उपकादिभ्योऽन्यतरस्यामद्वन्द्वे

३१. उपक लमक भ्रष्टक कपिष्ठल कृष्णाजिन कृष्णसुन्दर चूडारक आडारक गडुक उदङ्क सुधायुक अबन्धक पिङ्गलक पिष्टक सुपिष्ट (सुपिष्ठ) मयूरकर्ण खरीजङ्घ शलाथल पतञ्जल पदञ्जल कठेरणि कुषीतक कशकृत्स्न (काशकृत्स्न) निदाघ कलशीकण्ठ दामकण्ठ कृष्णपिङ्गल कर्णक पर्णक जटिरक बधिरक जन्तुक अनुलोम अनुपद प्रतिलोम अपजग्ध प्रतान अनभिहित कमक वराटक लेखाभ्र कमन्दक पिञ्जूलक वर्णक मसूरकर्ण मदाघ कबन्तक कमन्तक कदामत्त दामकण्ठ–एते उपकादयः।।

---

**विमर्श**

१-इस सूत्र से 'बहुषु तेनैव' की अनुवृत्ति २।४।७०। तक तथा 'अस्त्रियाम्' की अनवृत्ति २।४।६५। तक जायेगी। २-यहां से 'गोत्रे' की अनुवृत्ति २।४।७०। तक जाती है।

७०. आगस्त्यकौण्डिन्ययोरगस्ति-कुण्डिनच्
७१. सुपो धातुप्रातिपदिकयोः
७२. अदिप्रभृतिभ्यः शपः[1]
७३. बहुलं[2] छन्दसि
७४. यङोऽचि च
७५. जुहोत्यादिभ्यः श्लुः[3]
७६. बहुलं छन्दसि
७७. गातिस्थाघुपाभूभ्यः सिचः परस्मैपदेषु[4]
(वा०) गापोर्ग्रहणे इण्पिबत्योर्ग्रहणम्।
७८. विभाषा[5] घ्राधेट्शाच्छासः
७९. तनादिभ्यस्तथासोः
८०. मन्त्रे घसह्वरणशवृदहाद्वृच्कृगमि-जनिभ्यो लेः[6]
८१. आमः
८२. अव्ययादाप्सुपः[7]
८३. नाव्ययीभावादतोऽ[8]म्त्वपञ्चम्याः
८४. तृतीयासप्तम्योर्बहुलम्
८५. लुटः प्रथमस्य डारौरसः
(द्विगुरुपञ्चोपक्रमं वेञो वयिर्न तौल्वलिभ्य आमः पञ्च।)

इति पाणिनीयसूत्रपाठे द्वितीयस्याध्यायस्य चतुर्थः पादः अध्यायश्च।



---

**विमर्श**

१-इस सूत्र से 'अदिप्रभृतिभ्यः' की अनुवृत्ति २।४।७३। तक तथा 'शपः' की अनुवृत्ति २।४।७६। तक जाती है। २-यहां से 'बहुलम्' की अनुवृत्ति २।४।७४। तक जाती है। ३-इस समस्त सूत्र की अनुवृत्ति २।४।७६। तक जाती है। ४-इस सूत्र से 'सिचः' की अनुवृत्ति २।४।७९। तक तथा 'परस्मैपदेषु' की अनुवृत्ति २।४।७८। तक जायेगी। ५-यहां से 'विभाषा' की अनुवृत्ति २।४।७९। तक जाती है। ६-इस सूत्र से 'लेः' की अनुवृत्ति २।४।८१। तक जायेगी। ७-यहां से 'सुपः' की अनुवृत्ति २।४।८४। तक जायेगी। ८-इस सूत्र से 'अव्ययीभावादतोऽम्' की अनुवृत्ति २।४।८४। तक जायेगी।

# अथ तृतीयोऽध्यायः
## प्रथमः पादः

१. प्रत्ययः[1]

२. परश्च[2]

३. आद्युदात्तश्च[3]

४. अनुदात्तौ सुप्पितौ

५. गुप्तिज्किद्‌भ्यः सन्[4]

६. मान्बधदान्शान्भ्यो दीर्घश्चाभ्यासस्य

७. धातोः कर्मणः समानकर्तृकादिच्छायां वा[5]

(वा०) आशङ्कायां सन्वक्तव्यः।

८. सुप आत्मनः क्यच्[6]

(वा०) मान्तादव्ययाच्च क्यच् न।

९. काम्यच्च

१०. उपमानादाचारे[7]

(वा०) अधिकरणाच्चेति वक्तव्यम्।

११. कर्तुः क्यङ्[8] सलोपश्च

(वा०) आचारेऽवगल्भक्लीबहोढेभ्यः क्विब्वा वक्तव्यः।

१२. भृशादिभ्यो भुव्य[9] च्वे लोपश्च हलः

३२. भृश शीघ्र चपल मन्द पण्डित उत्सुक सुमनस् दुर्मनस् अभिमनस् उन्मनस् रहस् रोहत् रेहत् संश्रत् तृपत् शश्वत् भ्रमत् वेहत् शुचिस् शुचिवर्चस् अण्डरवर्चस् ओजस् सुरजस् अरजस्–एते भृशादयः।।

१३. लोहितादिडाज्भ्यः क्यष्

३३. लोहित चरित नील फेन मद्र हरित दास मन्द–लोहितादिराकृतिगणः।।

(वा०) लोहितडाज्भ्यः क्यष्वचनम्।

(वा०) भृशादिष्वितराणि।

१४. कष्टाय क्रमणे

(वा०) सत्रकक्षकष्टकृच्छ्रगहनेभ्यः कण्वचिकीर्षायामिति वक्तव्यम्।

---

**विमर्श**

१-इस सूत्र का अधिकार यहां से प्रारम्भ होकर पञ्चमाध्याय की समाप्ति पर्यन्त अर्थात् ५।४।१६०। तक जाता है। २-इस सूत्र का भी अधिकार ५।४।१६०। तक जाता है। ३-इस सूत्र का भी अधिकार ५।४।१६०। तक जायेगा। ४-इस सूत्र से 'सन्' की अनुवृत्ति ३।१।७। तक जायेगी। ५-इस सूत्र से 'वा' की अनुवृत्ति ३।१।२२। तक तथा 'कर्मणः' की अनुवृत्ति ३।१।१०। तक और 'इच्छायाम्' की अनुवृत्ति ३।१।९। तक जाती है। ६-यहाँ से 'सुपः' की अनुवृत्ति ३।१।११। तक तथा 'आत्मनः' की ३।१।९। तक और 'क्यच्' की अनुवृत्ति ३।१।१०। तक जायेगी। ७-इस निखिल सूत्र की अनुवृत्ति ३।१।११। तक जायेगी। ८-यहाँ से 'क्यङ्' की अनुवृत्ति ३।१।१८। तक जाती है। ९-यहां से 'अच्वेः' और 'भुवि' की अनुवृत्ति ३।१।१३। तक जायेगी।

१५. कर्मणो[1] रोमन्थतपोभ्यां वर्तिचरोः
(वा०) हनुचलन इति वक्तव्यम्।
(वा०) तपसः परस्मैपदं च।
१६. बाष्पोष्मभ्यामुद्वमने
(वा०) फेनाच्चेति वक्तव्यम् ।
१७. शब्दवैरकलहाभ्रकण्वमेघेभ्यः करणे[2]
(वा०) सुदिनदुर्दिननीहारेभ्यश्च।
१८. सुखादिभ्यः कर्तृवेदनायाम्
३४. सुख दुःख तृप्त कृच्छ्र अस्र आस्र अलीक प्रतीप करुण कृपण सोढ इत्येतानि सुखादीनि।
१९. नमोवरिवश्चित्रङः क्यच्
(वा०) नमसः पूजायाम्।
(वा०) वरिवसः परिचर्यायाम्।
(वा०) चित्रङ आश्चर्ये।
२०. पुच्छभाण्डचीवराण्णिङ्
(वा०) भाण्डात्समाचयने।
(वा०) चीवरादार्जने परिधाने च।
(वा०) पुच्छादुदसने व्यसने पर्यसने च।
२१. मुण्डमिश्रश्लक्ष्णलवणव्रतवस्त्र-हलकलकृततूस्तेभ्यो णिच्
(वा०) हलिकल्योरत्वनिपातनं सन्वद्भावप्रतिषेधार्थम्।
२२. धातोरेकाचो हलादेः क्रियासमभिहारे यङ्[3]
(वा०) सूचिसूत्रिमूत्र्यट्यर्त्यशूर्णोतिभ्यो यङ्वाच्यः।
२३. नित्यं[4] कौटिल्ये गतौ
२४. लुपसदचरजपजभदहदशगृभ्यो भावगर्हायाम्
२५. सत्यापपाशरूपवीणातूलश्लोक-सेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्[5]
२६. हेतुमति च
(वा०) तत्करोति तदाचष्टे।
(वा०) आख्यानात्कृतस्तदाचष्टे कृल्लुक्प्रकृतिप्रत्यापत्तिः प्रकृतिवच्च कारकम्।
(वा०) प्रातिपदिकाद्धात्वर्थे बहुलम्।
(वा०) धातुरूपं च।
(वा०) कर्तृकरणाद्धात्वर्थे।
(वा०) ( बहुलमेतन्निदर्शनम् )
(वा०) णिङङ्गान्निरसने।
२७. कण्ड्वादिभ्यो यक्
३५. कण्डूञ् मन्तु हृणीङ् वल्गु असु (मनस्) महीङ् लाट् लेट् इरस् इरज् (इरञ्) दुवस् उषस् वेट मेधा कुषुभ (नमस्) मगध तन्तस्

---

**विमर्श**

१-यहां से 'कर्मणः' की अनुवृत्ति ३।१।२१। तक जायेगी। २-इस सूत्र से 'करणे' की अनुवृत्ति ३।१।२१। तक जाती है। ३-इस सूत्र से 'धातोः' का अधिकार ३।१।९०। तक जाता है। इसी प्रकार इसी सूत्र से 'यङ्' की अनुवृत्ति ३।१।२४। तक जाती है। ४-यहां से 'नित्यम्' की अनुवृत्ति ३।१।२४। तक जायेगी। ५-इस सूत्र से 'णिच्' की अनुवृत्ति ३।१।२६। तक जाती है।

पम्पस् (पपस्) सुख दुःख (भिक्ष चरण चरम अवर) सपर अरर (अरर्) भिषज् भिष्णुज् (अपर आर) इषुध वरण चुरण तुरण भुरण गद्गद एला केला खेला (वेला शेला) लिट् लोट् लेखा (लेख) रेखा द्रवस् तिरस् अगद उरस् तरण (तरिण) पयस् संभूयस सम्बर-आकृतिगणोऽयम्।। इति कण्ड्वादिः।।

२८. गुपूधूपविच्छिपणिपनिभ्य आयः

२९. ऋतेरीयङ्

३०. कमेर्णिङ्

३१. आयादय आर्धधातुके वा

३२. सनाद्यन्ता धातवः

३३. स्यतासी लृलुटोः

३४. सिब्बहुलं लेटि

(वा०) सिब्बहुलं छन्दसि णिद्वक्तव्यः।

३५. कास्प्रत्ययादाममन्त्रे लिटि[1]

(वा०) कास्यनेकाज्ग्रहणं कर्तव्यम्।

३६. इजादेश्च गुरुमतोऽनृच्छः

३७. दयायासश्च

३८. उषविदजागृभ्योऽन्यतरस्याम्[2]

३९. भीह्रीभृहुवां श्लुवच्च

४०. कृञ्चानुप्रयुज्यते लिटि

४१. विदांकुर्वन्त्वित्यन्यतरस्याम्[3]

४२. अभ्युत्सादयां प्रजनयांचिकयां रमयामकः पावयांक्रियाद्विदामक्रन्निति च्छन्दसि

४३. च्लि[4]लुङि

४४. च्लेः[5] सिच्

(वा०) स्पृशमृशकृषतृपदृपां च्लेः सिज्वा वक्तव्यः

४५. शल इगुपधादनिटः क्सः[6]

४६. श्लिष आलिङ्गने

४७. न दृशः

४८. णिश्रिद्रुस्रुभ्यः कर्तरि चङ्[7]

(वा०) कमेश्च्लेश्चङ्वक्तव्यः।

४९. विभाषा[8] धेट्श्व्योः

५०. गुपेश्छन्दसि[9]

५१. नोनयतिध्वनयत्येलयत्यर्दयतिभ्यः

५२. अस्यतिवक्तिख्यातिभ्योऽङ्[10]

५३. लिपिसिचिह्वश्च[11]

५४. आत्मनेपदेष्वन्यतरस्याम्

५५. पुषादिद्युताद्य्लृदितः परस्मैपदेषु[12]

---

**विमर्श**

१-इस सूत्र से 'आम्' की अनुवृत्ति ३।१।४०।तक तथा 'अमन्त्रे लिटि' की ३।१।३९। तक जायेगी। २-यहां से 'अन्यतरस्याम्' की अनुवृत्ति ३।१।३९। तक जाती है। ३-इस सूत्र से 'अन्यतरस्याम्' की अनवृत्ति ३।१।४२। तक जायेगी। ४-इस सूत्र से 'लुङि' की अनुवृत्ति ३।१।६६। तक जाती है। ५-यहां से 'च्लेः' की भी अनुवृत्ति ३।१।६६। तक जायेगी। ६-इस सूत्र से 'क्सः' की अनुवृत्ति ३।१।४७। तक जाती है। ७-यहां से 'चङ्' की अनुवृत्ति ३।१।५१। तक तथा 'कर्तरि' की अनुवृत्ति ३।१।६१। तक जाती है। ८-यहां से 'विभाषा' की अनुवृत्ति ३।१।५०। तक जायेगी। ९-यहां से 'छन्दसि' की अनुवृत्ति ३।१।५१। तक जायेगी। १०-यहां से 'अङ्' की अनुवृत्ति ३।१।५९। तक जाती है। ११-इस सूत्र से 'लिपिसिचिह्वः' की अनुवृत्ति ३।१।५४। तक जायेगी। १२-इस सूत्र से 'परस्मैपदेषु' की अनुवृत्ति ३।१।५४। तक जाती है। यहां दिवादिगणीय 'पुष पुष्टौ' धातु से लेकर 'गृधु अभिकांक्षायाम्' तक पुषादि गण तथा भ्वादि के 'द्युत दीप्तौ' से लेकर 'कृपू सामर्थ्ये' तक द्युतादि धातुएँ परिगणित की गई हैं।

५६. सर्तिशास्त्यर्तिभ्यश्च
५७. इरितो वा[१]
५८. जृस्तम्भुम्रुचुम्लुचुग्रुचुग्लुचुग्लु-श्विभ्यश्च
५९. कृमृदृरुहिभ्यश्छन्दसि
६०. चिण्ते[२]पदः
६१. दीपजनबुधपूरितायिप्यायिभ्योऽन्य-तरस्याम्[३]
६२. अचः कर्मकर्तरि[४]
६३. दुहश्च
६४. न[५] रुधः
६५. तपोऽनुतापे च
६६. चिण्भावकर्मणोः[६]
६७. सार्वधातुके[७]यक्
६८. कर्तरि[८]शप्
६९. दिवादिभ्यः श्यन्[९]
७०. वा[१०] भ्राशभ्लाशभ्रमुक्रमुक्लमु-त्रसित्रुटिलषः
७१. यसोऽनुपसर्गात्
७२. संयसश्च
७३. स्वादिभ्यः श्नुः[११]
७४. श्रुवः शृ च
७५. अक्षोऽन्यतरस्याम्[१२]
७६. तनूकरणे तक्षः
७७. तुदादिभ्यः शः
७८. रुधादिभ्यः श्नम्
७९. तनादिकृञ्भ्य उः[१३]
८०. धिन्विकृण्व्योर च
८१. क्र्यादिभ्यः श्ना[१४]
८२. स्तन्भुस्तुन्भुस्कन्भुस्कुन्भुस्कुञ्भ्यः श्नुश्च
८३. हलः श्नः[१५] शानज्झौ
८४. छन्दसि[१६] शायजपि
८५. व्यत्ययो बहुलम्
८६. लिङ्याशिष्यङ्
(वा०) दृशेरग्वक्तव्यः।
८७. कर्मवत्कर्मणा[१७]तुल्यक्रियः
(वा०) सकर्मकाणां प्रतिषेधो वक्तव्यः।

---

**विमर्श**

१-यहाँ से 'वा' की अनुवृत्ति ३।१।५८। तक जाती है। २-इस सूत्र से 'चिण्' की अनुवृत्ति ३।१।६५। तक तथा 'ते' की ३।१।६६। तक जाती है। ३-यहाँ से 'अन्यतरस्याम्' की अनुवृत्ति ३।१।६३। तक जायेगी। ४-यहाँ से 'कर्मकर्तरि' की अनुवृत्ति ३।१।६५। तक जायेगी। ५- यहाँ से 'न' की अनुवृत्ति ३।१।६५। तक जायेगी। ६-इस सूत्र से 'भावकर्मणोः' की अनुवृत्ति ३।१।६७। तक जायेगी। ७-इस सूत्र से 'सार्वधातुके' की अनुवृत्ति ३।१।८२। तक जाती है। ८-यहाँ से 'कर्तरि' की अनुवृत्ति ३।१।८८। तक जाती है। ९-इस सूत्र से 'श्यन्' की अनुवृत्ति ३।१।७२। तक जायेगी। १०-इस सूत्र से 'वा' की अनुवृत्ति ३।१।७२। तक जाती है। ११-यहाँ से 'श्नुः' की अनुवृत्ति ३।१।७६। तक जायेगी। १२-यहाँ से 'अन्यतरस्याम्' की अनुवृत्ति ३।१।७६। तक जाती है। १३-यहाँ से 'उः' की अनुवृत्ति ३।१।८०। तक जायेगी। १४-यहाँ से 'श्ना' की अनुवृत्ति ३।१।८२। तक जाती है। १५-इस सूत्र से 'श्नः' की अनुवृत्ति ३।१।८४। तक जाती है। १६-यहाँ से 'छन्दसि' की अनुवृत्ति ३।१।८६। तक जाती है। १७-यहाँ से 'कर्मवत्' की अनुवृत्ति ३।१।९०। तक जाती है।

(वा०) दुहिपच्योर्बहुलं सकर्मकयोः।
(वा०) सृजियुज्योः श्यंस्तु।
(वा०) सृजेः श्रद्धोपपन्ने कर्तर्येवेति वाच्यम्।
(वा०) भूषाकर्मकिरादिसनां चान्यत्रात्मनेपदात्।
८८. तपस्तपःकर्मकस्यैव
८९. न दुहस्नुनमां यक्चिणौ
(वा०) यक्चिणोः प्रतिषेधे हेतुमण्णिच् श्रिब्रूञामुपसंख्यानम्
(वा०) यक्चिणोः प्रतिषेधे णिश्रन्थिग्रन्थिब्रूञात्मनेपदाकर्मकाणामुपसंख्यानम्
९०. कुषिरञ्जोः प्राचांश्यन्परस्मैपदं च
९१. धातोः[1]
९२. त[2]त्रोपपदं सप्तमीस्थम्
९३. कृदतिङ्[3]
९४. वाऽसरूपोऽस्त्रियाम्
९५. कृत्याः[4] (प्राङ्ण्वुलः)
९६. तव्यत्तव्यानीयरः
(वा०) केलिमर उपसंख्यानम् ।
(वा०) वसेस्तव्यत्कर्तरि णिच्च
९७. अचो यत्[5]
(वा०) तकिशसिचतियतिजनिभ्योयद्वाच्यः।
(वा०) हनो वा यद्वधश्च वक्तव्यः।
९८. पोरदुपधात्
९९. शकिसहोश्च
१००. गदमदचरयमश्चानुपसर्गे
(वा०)चरेराङि चागुरौ।
१०१. अवद्यपण्यवर्या गर्ह्यपणितव्यानिरोधेषु
१०२. वह्यं करणम्
१०३. अर्यः स्वामिवैश्ययोः
१०४. उपसर्या काल्या प्रजने
१०५. अजर्यं सङ्गतम्
१०६. वदः सुपि क्यप्च[6]
१०७. भुवो भावे[7]
१०८. हनस्त च
१०९. एतिस्तुशास्वृदृजुषः क्यप्
(वा०) आङ्पूर्वादञ्जेः संज्ञायामुपसंख्यानम्
(वा०) शसिदुहिगुहिभ्यो वा।
११०. ऋदुपधाच्च क्लृपिचृतेः
१११. ई च खनः
११२. भृञोऽसंज्ञायाम्
(वा०) समश्च बहुलम्।
११३. मृजेर्विभाषा
११४. राजसूयसूर्यमृषोद्यरुच्यकुप्यकृष्टपच्याव्यथ्याः
११५. भिद्योद्ध्यौ नदे

---

**विमर्श**

१-इस सूत्र का अधिकार तृतीय अध्याय की समाप्ति पर्यन्त अर्थात् ३।४।११७। तक जाता है। २-यहाँ से 'तत्र' की अनुवृत्ति ३।१।९४। तक जाती है। ३-इससूत्र का अधिकार ३।४।७७। के पूर्व तक जानना चाहिए। ४-इस सूत्र का अधिकार ३।१।१३३। तक जाता है। ५-यहाँ से 'यत्' की अनुवृत्ति ३।१।१०६। तक जायेगी। ६-इस सूत्र से 'सुपि' की अनुवृत्ति ३।१।१०८। तक तथा 'क्यप्' की अनुवृत्ति ३।१।१२१। तक जायेगी। ७-इस सूत्र से 'भावे' की अनुवृत्ति ३।१।१०८। तक जायेगी।

११६. पुष्यसिध्यौ नक्षत्रे

११७. विपूयविनीयजित्या मुञ्ज-कल्कहलिषु

११८. प्रत्यपिभ्यां ग्रहेः[1]

(वा०) छन्दसीति वक्तव्यम्।

११९. पदास्वैरिबाह्यापक्ष्येषु च

१२०. विभाषाकृवृषोः

१२१. युग्यं च पत्रे

१२२. अमावस्यदन्यतरस्याम्

१२३. छन्दसि निष्टर्क्यदेवहूयप्रणी-योन्नीयोच्छिष्यमर्यस्तर्याध्वर्यखन्यखा-न्यदेवयज्यापृच्छ्यप्रतिषीव्यब्रह्मवा-द्यभाव्यस्ताव्योपचाय्यपृडानि

(वा०) हिरण्य इति वक्तव्यम्।

१२४. ऋहलोर्ण्यत्[2]

(वा०) पाणौ सृजेर्ण्यत्।

(वा०) समवपूर्वाच्च।

(वा०) लपिदभिभ्यां चेति वक्तव्यम्।

१२५. ओरावश्यके

१२६. आसुयुवपिरपित्रपिचमश्च

१२७. आनाय्योऽनित्ये

१२८. प्रणाय्योऽसंमतौ

१२९. पाय्यसान्नाय्यनिकाय्यधाय्या मानहविर्निवाससामिधेनीषु

१३०. क्रतौ कुण्डपाय्यसंचाय्यौ

१३१. अग्नौ[3]परिचाय्योपचाय्यसमूह्याः

१३२. चित्याग्निचित्ये च

१३३. ण्वुल्तृचौ

१३४. नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः

३६. 'नन्दिवाशिमदिदूषिसाधिवर्धिशोभिरोचिभ्यो ण्यन्तेभ्यः संज्ञायाम्' २२। नन्दनः वाशनः मदनः दूषणः साधनः वर्धनः शोभनः रोचनः। 'सहितपिदमः संज्ञायाम्' २३। सहनः तपनः दमनः जल्पनः रमणः दर्पणः संक्रन्दनः संकर्षणः संहर्षणः जनार्दनः यवनः मधुसूदनः विभीषणः लवणः चित्तविनाशनः कुलदमनः (शत्रुदमनः) इति नन्द्यादिः।

३७. ग्राही उत्साही उद्दासी उद्भासी स्थायी मन्त्री संमर्दी । 'रक्षश्रुवपशां नौ २४। निरक्षी निश्रावी निवापी निशायी। 'याचृव्याहृसंव्याहृव्रजवदवसां प्रतिषिद्धानाम्' २५। अयाची अव्याहारी असंव्याहारी अव्राजी अवादी अवासी। 'अचामचित्तकर्तृकाणाम्' २६। अकारी अहारी अविनायी (विशायी विषायी) 'विशयी विषयी देशे' २७। विशयी विषयी देशः। 'अभिभावी भूते' २८। अपराधी उपरोधी परिभवी परिभावी ।। इति ग्रहादिः।।

३८. पच वच वप वद चल पत नट् भषट् प्लवट् चरट् गरट् तरट् चोरट् गाहट् सूरट् देवट् (दोषट्) जर (रज) मर (मद) क्षम (क्षय) सेव मेष कोप (कोष) मेध नर्त व्रण दर्श सर्प (दम्भ दर्प) जारभर श्वपच।। इति पचादिराकृतिगणः।।

१३५. इगुपधज्ञाप्रीकिरः कः[4]

---

**विमर्श**

१-यहाँ से 'ग्रहेः' की अनुवृत्ति ३।१।११९। तक जाती है। २-यहाँ से 'ण्यत्' की अनुवृत्ति ३।१।१३१। तक जायेगी। इस सूत्र में 'ऋहलोः' में पञ्चम्यर्थ में षष्ठी है। ३-इस सूत्र से 'अग्नौ' की अनुवृत्ति ३।१।१३२। तक जाती है। ४-इस सूत्र से 'कः' की अनुवृत्ति ३।१।१३६। तक जायेगी।

१३६. आतश्चोपसर्गे[1]

१३७. पाघ्राध्माधेट्दृशः शः[2]

(वा०) घ्रः संज्ञायां न।

१३८. अनुपस[3]र्गाल्लिम्पविन्दधारिपारिवेद्युदेजिचेतिसातिसाहिभ्यश्च

(वा०) नौ लिम्पेः।

(वा०) गवादिषु विन्देः संज्ञायामुपसंख्यानम्।

१३९. ददातिदधात्योर्विभाषा[4]

१४०. ज्वलितिकसन्तेभ्यो णः[5]

(वा०) तनोतेर्ण उपसंख्यानम्।

१४१. श्याद्–व्यधास्रु संस्रवतीणवसा वह–लिह–श्लिष–श्वसश्च

१४२. दुन्योरनुपसर्गे

१४३. विभाषा ग्रहः[6]

१४४. गेहे कः

१४५. शिल्पिनि[7] ष्वुन्

(वा०) नृतिखनिरञ्जिभ्य इति वक्तव्यम्

१४६. ग[8]स्थकन्

१४७. ण्युट्[9]च

१४८. हश्च व्रीहिकालयोः

१४९. प्रुसृल्वः समभिहारे वुन्[10]

(वा०) साधुकारिण्युपसंख्यानम् ।

१५०. आशिषि च

(प्रत्ययो मुण्डविदां दीपजनक्रय्यादिभ्योऽवद्ययुग्यं च श्याद्व्यधा दश।।)

इति पाणिनीयसूत्रपाठे तृतीयस्याध्यायस्य प्रथमः पादः।



---

**विमर्श**

१-इस सूत्र से 'उपसर्गे' की अनुवृत्ति ३।१।१३७। तक जाती है। २-यहाँ से 'शः' की अनुवृत्ति ३।१।१३९। तक जायेगी। ३-यहाँ से 'अनुपसर्गात्' की अनुवृत्ति ३।१।१४०। तक जाती है। ४-इस सूत्र से 'विभाषा' की अनुवृत्ति भी ३।१।१४०। तक जायेगी। ५-इस सूत्र में 'ज्वल् इति' में इति शब्द आदि अर्थ का वाचक है। यहाँ से 'णः' की अनुवृत्ति ३।१।१४३। तक जाती है। ६-यहाँ से 'ग्रहः' की अनुवृत्ति ३।१।१४४। तक जायेगी। ७-यहाँ से 'शिल्पिनि' की अनुवृत्ति ३।१।१४७। तक जाती है। ८-यहाँ से 'गः' की अनुवृत्ति ३।१।१४७। तक जाती है। ९-यहाँ से 'ण्युट्' की अनुवृत्ति ३।१।१४८। तक जायेगी। १०-यहाँ से 'वुन्' की अनुवृत्ति ३।१।१५०। तक जायेगी।

## द्वितीयः पादः

१. कर्मण्यण्[1]
(वा०) शीलिकामिभक्ष्याचरिभ्यो णः।
(वा०) ईक्षिक्षमिभ्यां चेति वक्तव्यम्।
२. ह्वावामश्च
३. आतोऽनुपसर्गे कः[2]
(वा०) कविधौ सर्वत्र प्रसारणिभ्यो डः।
४. सुपि[3] स्थः
५. तुन्दशोकयोःपरिमृजापनुदोः
(वा०) आलस्यसुखाहरणयोरिति वक्तव्यम्।
(वा०) कप्रकरणे मूलविभुजादिभ्य उपसंख्यानम्।
३९. (वा १९९२)। मूलविभुज नखमुच काकगुह कुमुद महीध्र कुध्र गिद्र– आकृतिगणोऽयम्।। इति मूलविभुजादयः।।
६. प्रे दाज्ञः
७. समि ख्यः
८. गापोष्टक्
(वा०) पिबतेः सुराशीध्वोरिति वक्तव्यम्।
(वा०) बहुलं तणि।

९. हरतेरनुद्यमनेऽच्[4]
(वा०) शक्तिलाङ्गलाङ्कुशयष्टितोमर-घटघटीधनुष्षु ग्रहेरुपसंख्यानम्।
(वा०) सूत्रे च धार्येऽर्थे।
१०. वयसि च
११. आङि ताच्छील्ये
१२. अर्हः
१३. स्तम्बकर्णयो रमिजपोः
(वा०) हस्तिसूचकयोरिति वक्तव्यम्।
१४. शमि धातोः संज्ञायाम्
(वा०) शमि संज्ञायां धातुग्रहणं कृञो हेत्वादिषु टप्रतिषेधार्थम्।
१५. अधिकरणे[5]शेतेः
(वा०) पार्श्वादिषूपसंख्यानम्।
४०.(वा १९९९)। पार्श्व उदर पृष्ठ उत्तान अपमूर्धन् –इति पार्श्वादिः।।
(वा०) दिग्धसहपूर्वाच्चेति वक्तव्यम्
(वा०) उत्तानादिषु कर्तृषु।
(वा०) गिरौ डश्छन्दसि।
१६. चरेष्टः[6]
१७. भिक्षासेनादायेषु च

---

**विमर्श**

१-इस सूत्र से 'कर्मणि' की अनुवृत्ति ३।२।५८। तक तथा 'अण्' की अनुवृत्ति ३।२।२। तक जाती है। २-इस सूत्र से 'कः' की अनुवृत्ति ३।२।७। तक जायेगी। ३-यहाँ से 'सुपि' की अनुवृत्ति ३।२।८३। तक जाती है। ४-यहाँ से 'हरतेः' की अनुवृत्ति ३।२।११। तक तथा 'अच्' की अनुवृत्ति ३।२।१५। तक जायेगी। ५-इस सूत्र से 'अधिकरणे' की अनुवृत्ति ३।२।१६। तक जायेगी। ५-इस सूत्र से 'टः' की अनुवृत्ति ३।२।२३। तक तथा 'चरेः' की अनुवृत्ति ३।२।१७। तक जाती है।

१८. पुरोऽग्रतोऽग्रेषु सर्तेः[1]
१९. पूर्वे कर्तरि
२०. कृञो[2]हेतुताच्छील्यानुलोम्येषु
२१. दिवाविभानिशाप्रभाभास्करान्तानन्तादिबहुनान्दीकिंलिपिलिबिबलिभक्तिकर्तृचित्रक्षेत्रसंख्याजङ्घाबाह्वहर्यत्तद्धनुररुष्षु
(वा०) किंयत्तद्बहुषु कृञोऽज्विधानम्।
२२. कर्मणि भृतौ
२३. न शब्द–श्लोक–कलह–गाथा–वैर–चाटु–सूत्र–मन्त्र–पदेषु
२४. स्तम्बशकृतोरिन्[3]
(वा०) व्रीहिवत्सयोरिति वक्तव्यम्।
२५. हरतेर्दृतिनाथयोः पशौ
२६. फलेग्रहिरात्मंभरिश्च
२७. छन्दसि वनसनरक्षिमथाम्
२८. एजेः खश्[4]
(वा०) वातशुनीतिलशर्धेष्वजधेट्तुदजहातिभ्य उपसंख्यानम्।
२९. नासिकास्तनयोर्ध्माधेटोः[5]
(वा०) स्तने धेटः।
(वा०) नासिकायां ध्मश्च।
(वा०) घटिखारीखरीषूपसंख्यानम्।
३०. नाडीमुष्ट्योश्च
३१. उदि कूले रुजिवहोः
३२. वहाभ्रे लिहः
३३. परिमाणे पचः[6]
३४. मितनखे च
३५. विध्वरुषोस्तुदः
३६. असूर्यललाटयोर्दृशितपोः
३७. उग्रम्पश्येरम्मदपाणिन्धमाश्च
३८. प्रियवशे वदः खच्[7]
(वा०) गमेः सुपि वाच्यः।
(वा०) विहायसो विह इति वाच्यम्।
(वा०) खच्च डिद्वा वाच्यः।
(वा०) डे च विहायसो विहादेशो वक्तव्यः।
३९. द्विषत्परयोस्तापेः
४०. वाचि यमो व्रते
४१. पूः सर्वयोर्दारिसहोः
(वा०) भगे च दारेरिति काशिका।
४२. सर्वकूलाभ्रकरीषेषु कषः
४३. मेघर्तिभयेषु कृञः[8]
४४. क्षेमप्रियमद्रेऽण्च
४५. आशिते भुवः करणभावयोः
४६. संज्ञायां[9]भृ–तृ–वृ–जि–धारि–सहितपि–दमः

---

**विमर्श**

१-यहॉ से 'सर्तेः' की अनुवृत्ति ३।२।१९। तक जाती है। २-यहॉ से 'कृञः' की अनुवृत्ति ३।२।२४। तक जायेगी। ३-इस सूत्रसे 'इन्' की अनुवृत्ति ३।२।२७। तक जायेगी। ४-यहॉ से 'खश्' की अनुवृत्ति ३।२।३७। तक जाती है। ५-यहाँ से 'ध्माधेटोः' की अनुवृत्ति ३।२।३०। तक जायेगी। ६-यहॉ से 'पचः' की अनुवृत्ति ३।२।३४। तक जाती है। ७-यहॉ से 'खच्' की अनुवृत्ति ३।२।४७। तक जायेगी। ८-इस सूत्र से 'कृञः' की अनुवृत्ति ३।२।४४। तक जायेगी। ९-यहॉ से 'संज्ञायाम्' की अनुवृत्ति ३।२।४७। तक जाती है।

४७. गमश्च[१]
४८. अन्तात्यन्ताध्वदूरपारसर्वानन्तेषु डः[२]
(वा०) डप्रकरणे सर्वत्रपन्नयोरुपसंख्यानम्।
(वा०) उरसो लोपश्च।
(वा०) सुदुरोरधिकरणे।
(वा०) निसो देशे।
(वा०) अन्यत्रापि दृश्यत इति वक्तव्यम्
४९. आशिषि हनः[३]
(वा०) दारावाहनोऽणन्तस्य च टः संज्ञायाम्।
(वा०) चारौ वा।
(वा०) कर्मणि समि च।
५०. अपे क्लेशतमसोः
५१. कुमारशीर्षयोर्णिनिः
५२. लक्षणे जायापत्योष्टक्[४]
५३. अमनुष्यकर्तृके च
५४. शक्तौ हस्तिकवाटयोः
५५. पाणिघताडघौ शिल्पिनि
(वा०) राजघ उपसंख्यानम्।
५६. आढ्यसुभगस्थूलपलितनग्नान्धप्रियेषु च्व्यर्थेष्वच्वौ[५]कृञः करणे ख्युन्
५७. कर्तरि भुवः खिष्णुच्खुकञौ
५८. स्पृशोऽनुदके क्विन्[६]
५९. ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चां च
६०. त्यदादिषु दृशोऽनालोचने कञ्च
(वा०) समानान्ययोश्चेति वक्तव्यम्
(वा०) दृशेः क्सश्चेति वक्तव्यम्।
६१. सत्सूद्विषद्रुहदुहयुजविदभिदच्छिदजिनीराजामुपसर्गेऽपि[७]क्विप्
६२. भजो ण्विः[८]
६३. छन्दसि[९] सहः
६४. वहश्च[१०]
६५. कव्यपुरीषपुरीष्येषु ञ्युट्[११]
६६. हव्येऽनन्तः पादम्
६७. जनसनखनक्रमगमो विट्[१२]
६८. अदोऽ[१३]नन्ने
६९. क्रव्ये च
७०. दुहः कब्घश्च
७१. मन्त्रे श्वेतवहोक्थशस्पुरोडाशो ण्विन्[१४]

---

**विमर्श**

१-यहाँ से 'गमः' की अनुवृत्ति ३।२।४८। तक जायेगी। २-यहाँ से 'डः' की अनुवृत्ति ३।२।५०। तक जाती है। ३-यहाँ से 'हनः' की अनुवृत्ति ३।२।५५। तक जाती है। ४-यहाँ से 'टक्' प्रत्यय की अनुवृत्ति ३।२।५४। तक जाती है। ५-इस सूत्र से 'आढ्यसुभगस्थूलपलितनग्नान्धप्रियेषु च्व्यर्थेष्वच्वौ' की अनुवृत्ति ३।२।५७। तक जाती है। ६-यहाँ से 'क्विन्' की अनुवृत्ति ३।२।६०। तक जायेगी। ७-यहाँ से 'उपसर्गेऽपि' की अनुवृत्ति ३।२।७७। तक जायेगी। ८-यहाँ से 'ण्वि' की अनुवृत्ति ३।२।६४। तक जायेगी। ९-'छन्दसि' की अनुवृत्ति ३।२।६७। तक जाती है। १०-यहाँ से 'वहः' की अनुवृत्ति ३।२।६६। तक जायेगी। ११-यहाँ से 'ञ्युट्' की अनुवृत्ति ३।२।६६। तक जायेगी। १२-यहाँ से 'विट्' की अनुवृत्ति ३।२।६९। तक जाती है। १३-'अदः' की भी अनुवृत्ति ३।२।६९। तक जायेगी। १४-यहाँ से 'मन्त्रे ण्विन्' की अनुवृत्ति ३।२।७२। तक जाती है।

(वा०) श्वेतवहादीनां डस् पदस्येति वक्तव्यम्।
(वा०) अवया श्वेतवाः पुरोडाश्च।
७२. अवे यजः[१]
७३. विजुपे छन्दसि[२]
७४. आतो मनिन्क्वनिब्वनिपश्च[३]
७५. अन्येभ्योऽपि दृश्यन्ते
७६. क्विप्च[४]
७७. स्थः क च
७८. सुप्यजातौ णिनि[५]स्ताच्छील्ये
(वा०) णिङ्विधौ साधुकारिण्युपसंख्यानम्।
(वा०) ब्रह्मणि वदः।
७९. कर्तर्युपमाने
८०. व्रते
८१. बहुलमाभीक्ष्ण्ये
८२. मनः[६]
८३. आत्ममाने खश्च
८४. भूते[७]
८५. करणे यजः
८६. कर्मणि हनः[८]
८७. ब्रह्मभ्रूणवृत्रेषु क्विप्[९]
८८. बहुलं छन्दसि
८९. सुकर्मपापमन्त्रपुण्येषु कृञः
९०. सोमे सुञः
९१. अग्नौ चेः[१०]
९२. कर्मण्यग्न्याख्यायाम्
९३. कर्मणीनिविक्रियः
(वा०) कुत्सितग्रहणं कर्तव्यम्।
९४. दृशेः क्वनिप्[११]
९५. राजनि युधिकृञः[१२]
९६. सहे च
९७. सप्तम्यां जनेर्डः[१३]
९८. पञ्चम्यामजातौ
९९. उपसर्गे[१४] च संज्ञायाम्
१००. अनौ कर्मणि

---

**विमर्श**

१-'यजः' की अनुवृत्ति ३।२।७३।तक जाती है। २-यहाँ से 'छन्दसि' की अनुवृत्ति ३।२।७४। तक तथा 'विच्' की ३।२।७५। तक जाती है। ३-इस सूत्र से 'मनिन्क्वनिब्वनिपः' की अनुवृत्ति ३।२।७५। तक जायेगी। ४-यहाँ से 'क्विप्' की अनुवृत्ति ३।२।७७। तक जाती है। ५-यहाँ से 'णिनिः' की अनुवृत्ति ३।२।८६। तक तथा 'सुपि' की अनुवृत्ति ३।२।८३। तक जायेगी। ६-इस समस्त सूत्र की अनुवृत्ति ३।२।८३। तक जाती है। ७-इस सूत्र का अधिकार 'वर्तमाने लट्' (३।२।१२३।) से पूर्व तक अर्थात् ३।२।१२२। तक जाता है। ८-यहाँ से 'हनः' की अनुवृत्ति ३।२।८८। तक तथा 'कर्मणि' की अनुवृत्ति ३।२।९५। तक जाती है। ९-यहाँ से 'क्विप्' की अनुवृत्ति३।२।९२। तक जायेगी। १०-यहाँ से 'चेः' की अनुवृत्ति ३।२।९२। तक जायेगी। ११-'क्वनिप्' की अनुवृत्ति ३।२।९६। तक जाती है। १२-'युधिकृञः' की भी अनुवृत्ति ३।२।९६। तक जाती है। १३-'जनेर्डः' की अनुवृत्ति ३।२।१०१। तक जायेगी। १४-इस सूत्र से 'उपसर्गे' की अनुवृत्ति ३।२।१००। तक जाती है।

१०१. अन्येष्वपि दृश्यते
(वा०) अन्येभ्योऽपि दृश्यते।
१०२. निष्ठा
(वा०) आदिकर्मणि निष्ठा वक्तव्या।
१०३. सुयजोर्ङ्वनिप्
१०४. जीर्यतेरतृन्
१०५. छन्दसि[1] लिट्
१०६. लिटः कानज्वा[2]
१०७. क्वसु[3]श्च
१०८. भाषायां सदवसश्रुवः
१०९. उपेयिवाननाश्वाननूचानश्च
११०. लुङ्
१११. अनद्यतने[4] लङ्
११२. अभिज्ञावचने ऌट्[5]
११३. न यदि
११४. विभाषा साकाङ्क्षे
११५. परोक्षे लिट्[6]
(वा०) अत्यन्तापह्नवे लिड्वक्तव्यः।
११६. हशश्वतोर्लङ् च[7]
११७. प्रश्ने चासन्नकाले
११८. लट् स्मे[8]
११९. अपरोक्षे च
१२०. ननौ पृष्टप्रतिवचने[9]
१२१. नन्वोर्विभाषा[10]
१२२. पुरि लुङ्चास्मे
१२३. वर्तमाने[11] लट्
१२४. लटः शतृशानचाव[12]प्रथमा-समानाधिकरणे
१२५. संबोधने च
१२६. लक्षणहेत्वोः क्रियायाः
१२६. तौ सत्
१२८. पूङ्यजोः शानन्
१२९. ताच्छील्यवयोवचनशक्तिषु चानश्
१३०. इङ्धार्योः शत्र[13]कृच्छ्रिणि
१३१. द्विषोऽमित्रे
१३२. सुञो यज्ञसंयोगे
१३३. अर्हः प्रशंसायाम्

---

**विमर्श**

१-यहाँ से 'छन्दसि' की अनुवृत्ति ३।२।१०७। तक जायेगी। २-यहाँ से 'लिटः' 'वा' की अनुवृत्ति ३।२।१०९। तक जाती है। ३-'क्वसुः' की अनुवृत्ति ३।२।१०८। तक जाती है। ४-यहाँ से 'अनद्यतने' की अनुवृत्ति ३।२।११९। तक तथा मण्डूकप्लुतगति से ३।२।१२२। में भी जायेगी। ५-इस निखिल सूत्र की अनुवृत्ति ३।२।११४। तक जाती है। ६-यहाँ से 'परोक्षे' की अनुवृत्ति ३।२।११८। तक तथा 'लिट्' की अनुवृत्ति ३।२।११७। तक जायेगी। ७-'लङ्' की अनुवृत्ति ३।२।११७। तक जाती है। ८-यहाँ से 'लट्' की अनुवृत्ति ३।२।१२२। तक त्तथा 'स्मे' की ३।२।११९। तक जायेगी। ९-'पृष्टप्रतिवचने' की अनुवृत्ति ३।२।१२१। तक जाती है। १०-यहाँ से 'विभाषा' की अनुवृत्ति ३।२।१२२। तक जायेगी। ११-'वर्तमाने' की अनुवृत्ति ३।३।१। तक जाती है। १२-यहाँ से 'लटः शतृ–शानचौ' की अनुवृत्ति ३।२।१२६। तक जायेगी। १३-इस सूत्र से 'शतृ' की अनुवृत्ति ३।२।१३३। तक जायेगी।

१३४. आ क्वेस्तच्छील–तद्धर्म–तत्साधुकारिषु[1]

१३५. तृन्

(वा०) तृन्विधावृत्विक्षु चानुपसर्गस्य।

(वा०) नयतेः षुक्।

(वा०) त्विषेर्देवतायामकारश्चोपधाया-अनिट्त्वं च।

(वा०) क्षदेश्च युक्ते

(वा०) छन्दसि तृच्च

१३६. अलंकृञ्निराकृञ्प्रजनोत्पचोत्पतोन्मदरुच्यपत्रपवृतुवृधुसहचर इष्णुच्[2]

१३७. णेश्छन्दसि[3]

१३८. भुवश्च[4]

१३९. ग्लाजिस्थश्च ग्स्नुः

१४०. त्रसिगृधिधृषिक्षिपेः क्नुः

१४१. शमित्यष्टाभ्यो घिनुण्[5]

१४२. संपृचानुरुधाङ्यमाङ्यसपरिसृसंसृजपरिदेविसंज्वरपरिक्षिपपरिरटपरिवदपरिदहपरिमुहदुषद्विषद्रुहदुहयुजाक्रीडविविचत्यजरजभजातिचरापचरामुषाभ्याहनश्च

१४३. वौ[6] कषलसकत्थस्रम्भः

१४४. अपे च लषः

१४५. प्रे लपसृद्रुमथवदवसः

१४६. निन्दहिंसक्लिशखादविनाशपरिक्षिपपरिरटपरिवादिव्याभाषासुयो वुञ्[7]

१४७. देविक्रुशोश्चोपसर्गे

१४८. चलनशब्दार्थादकर्मकाद्युच्[8]

१४९. अनुदात्तेतश्च हलादेः

१५०. जुचङ्क्रम्यदन्द्रम्यसृगृधिज्वलशुचलषपतपदः

१५१. क्रुधमण्डार्थेभ्यश्च

१५२. न[9] यः

१५३. सूददीपदीक्षश्च

१५४. लषपतपदस्थाभूवृषहनकमगमशृभ्य उकञ्

१५५. जल्पभिक्षकुट्टलुण्टवृङः षाकन्

१५६. प्रजोरिनिः[10]

१५७. जिदृक्षिविश्रीण्वमाव्यथाभ्यमपरिभूप्रसूभ्यश्च

१५८. स्पृहिगृहिपतिदयिनिद्रातन्द्राश्रद्धाभ्य आलुच्

---

**विमर्श**

१-इस सूत्र का अधिकार ३।२।१७८। तक जाता है। २-यहाँ से 'इष्णुच्' की अनुवृत्ति ३।२।१३८। तक जाती है। ३-'छन्दसि' की भी अनुवृत्ति ३।२।१३८। तक जाती है। ४-यहाँ से 'भुवः' की अनुवृत्ति ३।२।१३९। तक जायेगी। ५-यहाँ से 'घिनुण्' की अनुवृत्ति ३।२।१४५। तक जायेगी। ६-इस सूत्र से 'वौ' की अनुवृत्ति ३।२।१४४। तक जाती है। ७-यहाँ से 'वुञ्' की अनुवृत्ति ३।२।१४८। तक जायेगी। ८-इस सूत्र से 'अकर्मकात्' की अनुवृत्ति ३।२।१४९। तक तथा 'युच्' की ३।२।१५३। तक जाती है। ९-यहाँ से 'न' की अनुवृत्ति ३।२।१५३। तक जाती है। १०-यहाँ से 'इनिः' की अनुवृत्ति ३।२।१५७। तक जायेगी।

१५९. दाधेट्सिशदसदो रुः
१६०. सृघस्यदः क्मरच्
१६१. भञ्जभासमिदो घुरच्
१६२. विदिभिदिच्छिदेः कुरच्
१६३. इण्नशिजिसर्तिभ्यः क्वरप्[1]
१६४. गत्वरश्च
१६५. जागुरूकः[2]
१६६. यजजपदशां यङः
१६७. नमिकम्पिस्म्यजसकमहिंसदीपो रः
१६८. सनाशंसभिक्ष उः[3]
१६९. विन्दुरिच्छुः
१७०. क्याच्छन्दसि[4]
१७१. आदृगमहनजनः किकिनौ लिट् च
(वा०) भाषायां धाञ्कृसृगमिजनिनमिभ्यः।
(वा०) सासहिवावहिचाचलिपापतीनामुपसंख्यानम्।
१७२. स्वपितृषोर्नजिङ्
(वा०) धृषेश्चेति वाच्यम्।
१७३. शृवन्द्योरारुः
१७४. भियः क्रुक्लुकनौ
(वा०) क्रुकन्नपि वक्तव्यः।
१७५. स्थेशभासपिसकसो वरच्[5]
१७६. यश्च यङः
१७७. भ्राजभासधुर्विद्युतोजिपृजुग्रावस्तुवः क्विप्[6]
१७८. अन्येभ्योऽपि दृश्यते
(वा०) क्विब्वचिप्रच्छयायतस्तुकटप्रुजुश्रीणां दीर्घोऽसंप्रसारणं च।
(वा०) द्युतिगमिजुहोतीनां द्वे च।
(वा०) जुहोतेर्दीर्घश्च।
(वा०) दृणातेर्ह्रस्वश्च।
(वा०) ध्यायतेः संप्रसारणं च।
१७९. भुवः[7] संज्ञान्तरयोः
१८०. विप्रसंभ्यो ड्वसंज्ञायाम्
(वा०) डुप्रकरणे मितद्र्वादिभ्य उपसंख्यानम्।
१८१. धः कर्मणि ष्ट्रन्[8]
१८२. दाम्नीशसयुयुजस्तुतुदसिसिचमिहपतदशनहः करणे[9]
१८३. हलसूकरयोः पुवः
१८४. अर्तिलूधूसूखनसहचर इत्रः[10]

---

**विमर्श**

१-यहां से 'क्वरप्' की अनुवृत्ति ३।२।१६४। तक जाती है। २-इस सूत्र से 'ऊकः' की अनुवृत्ति ३।२।१६६। तक जाती है। ३-यहाँ से 'उः' की अनुवृत्ति ३।२।१७०। तक जायेगी। ४-यहाँ से 'छन्दसि' की अनुवृत्ति ३।२।१७१। सूत्र में जायेगी। ५-यहाँ से 'वरच्' की अनुवृत्ति ३।२।१७६। तक जायेगी। ६-इस सूत्र से 'क्विप्' की अनुवृत्ति ३।२।१७९। तक जाती है। ७-यहाँ से 'भुवः' की अनुवृत्ति ३।२।१८०। तक जाती है। ८-इस सूत्र से 'ष्ट्रन्' की अनुवृत्ति ३।२।१८३। तक जायेगी। ९-यहाँ से 'करणे' की अनुवृत्ति ३।२।१८६। तक जाती है। १०-यहाँ से 'इत्रः' की अनुवृत्ति ३।२।१८६। तक जायेगी।

१८५. पुवः[१] संज्ञायाम्

१८६. कर्तरि चर्षिदेवतयोः

१८७. ञीतः क्तः[२]

१८८. मतिबुद्धिपूजार्थेभ्यश्च

(कर्मणि दिवापूः सर्वसत्सूबहुलमन्येष्वपि नन्वोः शमिति भञ्जभासधः कर्मण्यष्टौ।)

इति पाणिनीयसूत्रपाठे तृतीयस्याध्यायस्य द्वितीयः पादः।



---

**विमर्श**

१-'पुवः' की अनवृत्ति ३।२।१८६। तक जायेगी। २-यहाँ से 'क्तः' की अनुवृत्ति ३।२।१८८। तक जाती है।

## तृतीयः पादः

१. उणादयो[१] बहुलम्
२. भूतेऽपि दृश्यन्ते
३. भविष्यति[२] गम्यादयः
४१. गमी आगमी भावी प्रस्थायी प्रतिरोधी प्रतियोधी प्रतिबोधी प्रतियायी प्रतियोगी–एते गम्यादयः।।
४. यावत्पुरानिपातयोर्लट्[३]
५. विभाषा[४] कदाकर्ह्योः
६. किंवृत्ते लिप्सायाम्
७. लिप्स्यमानसिद्धौ च
८. लोडर्थलक्षणे[५] च
९. लिङ् चोर्ध्वमौहूर्तिके
१०. तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम्[६]
११. भाववचनाश्च
१२. अण्कर्मणि च
१३. लृट् शेषे[७] च
१४. लृटः सद्वा
१५. अनद्यतने लुट्
१६. पदरुजविशस्पृशो घञ्[८]
(वा०) स्पृश उपतापे।
१७. सृ स्थिरे
(वा०) व्याधिमत्स्यबलेषु चेति वाच्यम्
१८. भावे[९]
१९. अकर्तरि च कारके संज्ञायाम्[१०]
२०. परिमाणाख्यायां सर्वेभ्यः
(वा०) दारजारौ कर्तरि णिलुक् च।
२१. इङश्च
(वा०) अपादाने स्त्रियामुपसंख्यानम् तदन्ताच्च वा ङीष्।
(वा०) शृवायुवर्णनिवृत्तेषु।
२२. उपसर्गे रुवः
२३. समि युद्रुदुवः
२४. श्रिणीभुवोऽनुपसर्गे
२५. वौ क्षुश्रुवः
२६. अवोदोर्नियः
२७. प्रे-द्रु–स्तु–स्रुवः
२८. निरभ्योः पूल्वोः
२९. उन्न्योर्ग्रः[११]
३० कृ धान्ये
३१. यज्ञे समि स्तुवः
३२. प्रे स्त्रो[१२]ऽयज्ञे

---

**विमर्श**

१-इस सूत्र से 'उणादयः' की अनुवृत्ति ३।३।३।तक जाती है। २-यहॉ से 'भविष्यति' की अनुवृत्ति ३।३।१५। तक जायेगी। ३-'लट्' की अनुवृत्ति ३।३।९। तक जायेगी। ४-'विभाषा' की अनुवृत्ति ३।३।९। तक जाती है। ५-यहॉ से 'लोडर्थलक्षणे' की अनुवृत्ति ३।३।९। त्तक जाती है। ६-यहॉ से 'क्रियायां क्रियार्थायाम्' की अनुवृत्ति ३।३।१४। तक जाती है। ७-'शेषे' की अनुवृत्ति ३।३।१४। त्तक जायेगी। ८-'घञ्' की अनुवृत्ति ३।३।५५। तक जाती है। ९-इस सूत्रका अधिकार ३।३।११२। तक जायेगा। १०-इस सूत्र का भी अधिकार ३।३।११२। तक जायेगा। ११-इस सूत्र से 'उन्न्योः' की अनुवृत्ति ३।३।३०। तक जाती है। १२-यहाँ से 'स्त्रः' की अनुवृत्ति ३।३।३४। तक जायेगी।

३३. प्रथने वा[१]वशब्दे
३४. छन्दोनाम्नि च
३५. उदि ग्रहः[२]
३६. समि मुष्टौ
३७. परिन्योर्नीणोर्द्यूताभ्रेषयोः
३८. परावनुपात्यय इणः
३९. व्युपयोः शेतेः पर्याये
४०. हस्तादाने चे[३]रस्तेये
४१. निवासचितिशरीरोपसमाधानेष्वादेश्च कः[४]
४२. सङ्घे चानौत्त्राधर्ये
४३. कर्मव्यतिहारे णच् स्त्रियाम्
४४. अभिविधौ भाव इनुण्
४५. आक्रोशेऽवन्योर्ग्रहः[५]
४६. प्रे लिप्सायाम्
४७. परौ यज्ञे
४८. नौ वृ धान्ये
४९. उदि श्रयतियौतिपूद्रुवः
५०. विभाषा[६]ऽऽङि रुप्लुवोः
५१. अवे ग्रहो[७] वर्षप्रतिबन्धे
५२. प्रे[८] वणिजाम्
५३. रश्मौ च
५४. वृणोतेराच्छादने
५५. परौ भुवोऽवज्ञाने
५६. एरच्
(वा०) भयादीनामुपसंख्यानं नपुंसके क्तादिनिवृत्त्यर्थम्।
(वा०) जवसवौ छन्दसि वक्तव्यौ।
५७. ऋदोरप्[९]
५८. ग्रहवृदृनिश्चिगमश्च
(वा०) वशिरण्योश्चोपसंख्यानम्।
(वा०) घञर्थे कविधानम्।
५९. उपसर्गेऽदः[१०]
६०. नौ ण च
६१. व्यधजपोरनुपसर्गे[११]
६२. स्वनहसोर्वा[१२]
६३. यमः समुपनिविषु च
६४. नौ[१३] गदनदपठस्वनः
६५. क्वणो वीणायां च
६६. नित्यं पणः परिमाणे
६७. मदोऽनुपसर्गे
६८. प्रमदसंमदौ हर्षे

---

**विमर्श**

१-यहाँ से 'वौ' की अनुवृत्ति ३।३।३४। तक जाती है। २-'ग्रहः' की अनुवृत्ति ३।३।३६। तक जायेगी। ३-'चेः' की अनुवृत्ति ३।३।४२। तक जाती है। ४-यहाँ से 'आदेश्च कः' की अनुवृत्ति ३।३।४२। तक जायगी। ५-'ग्रहः' की अनुवृत्ति ३।३।४७। तक जायेगी। ६-इस सूत्र से 'विभाषा' की अनुवृत्ति ३।३।५५। तक जायेगी। ७-'ग्रहः' की अनुवृत्ति ३।३।५३। तक जाती है। ८-'प्रे' की अनुवृत्ति ३।३।५४। तक जाती है। ९-यहाँ से 'अप्' की अनुवृत्ति ३।३।८७। तक जाती है। १०-'अदः' की अनुवृत्ति ३।३।६०। तक जाती है। ११-यहाँ से 'अनुपसर्गे' की अनुवृत्ति ३।३।६५। तक जायेगी। १२-'वा' की अनुवत्ति ३।३।६५। तक जायेगी। १३-'नौ' की अनुवृत्ति ३।३।६५। तक जाती है।

६९. समुदोरजः पशुषु
७०. अक्षेषु ग्लहः
७१. प्रजने सर्तेः
७२. ह्वः संप्रसारणं च[१] न्यभ्युपविषु
७३. आङि युद्धे
७४. निपानमाहावः
७५. भावेऽनुपसर्गस्य[२]
७६. हनश्च[३] वधः
७७. मूर्तौ घनः[४]
७८. अन्तर्घनो देशे
७९. अगारैकदेशे प्रघणः प्रघाणश्च
८०. उद्घनोऽत्याधानम्
८१. अपघनोऽङ्गम्
८२. करणे[५]ऽयोविद्रुषु
८३. स्तम्बे क च
८४. परौ घः
८५. उपघ्न आश्रये
८६. सङ्घोद्घौ गणप्रशंसयोः
८७. निघो निमितम्
८८. ड्वितः क्त्रिः
८९. ट्वितोऽथुच्
९०. यजयाचयतविच्छप्रच्छरक्षो नङ्
९१. स्वपो नन्
९२. उपसर्गे घोः किः[६]
९३. कर्मण्यधिकरणे च
९४. स्त्रियां क्तिन्[७]
(वा०) निष्ठायां सेट् इति वक्तव्यम्।
९५. स्थागापापचो भावे[८]
(वा०) श्रुयजीषिस्तुभ्यः करणे।
(वा०) ग्लाम्लाज्याहाभ्यो निः।
९६. मन्त्रे वृषेषपचमनविदभूवीरा उदात्तः[९]
९७. ऊतियूतिजूतिसातिहेतिकीर्तयश्च
९८. व्रजयजोर्भावे क्यप्[१०]
९९. संज्ञायां समजनिषदनिपतमनविद-षुञ्शीङ्भृञिणः
१००. कृञः श[११] च
१०१. इच्छा
(वा०) परिचर्यापरिसर्यामृगयाटाट्यानामुपसंख्यानम्
(वा०) जागर्तेरकारो वा।
१०२. अ[१२]प्रत्ययात्
१०३. गुरोश्च हलः
(वा०) निष्ठायां सेट् इति वक्तव्यम्
१०४. षिद्भिदादिभ्योऽङ्[१३]

---

**विमर्श**

१-इस सूत्र से 'ह्वः संप्रसारणम्' की अनुवृत्ति ३।३।७५। तक जाती है। २-यहाँ से 'भावेऽनुपसर्गस्य' की अनुवृत्ति ३।३।७६। तक जायेगी। ३-'हनः' की अनुवृत्ति ३।३।८७। तक जाती है। ४-यहाँ से 'घनः' की अनुवृत्ति ३।३।८३। तक जाती है। ५-'करणे' की अनुवृत्ति ३।३।८४। तक जायेगी। ६-इस सूत्र से 'घोः किः' की अनुवृत्ति ३।३।९३। तक जाती है। ७-इस सूत्र से 'स्त्रियाम्' की अनुवृत्ति ३।३।११२। तथा 'क्तिन्' की अनुवृत्ति ३।३।९७। तक जाती है। ८-'भावे' की अनुवृत्ति ३।३।९६। तक जायेगी। ९-'उदात्तः' की अनुवृत्ति ३।३।१००। तक जाती है। १०-'क्यप्' की भी अनुवृत्ति ३।३।१००। तक जाती है।११-यहाँ से 'श' की अनुवृत्ति ३।३।१०१। तक जायेगी। १२-'अ' की अनुवृत्ति ३।३।१०३। तक जायेगी। १३-इस सूत्र से 'अङ्' की अनुवृत्ति ३।३।१०६। तक जाती है।

४२. ('भिदा विदारणे' २९) ('छिदा द्वैधीकरणे' ३०) विदा। क्षिपा। ('गुहा गिर्योषध्योः' ३१) श्रद्धा। मेधा गोधा। ('आरा शस्त्र्याम्' ३२) हारा। ('कारा बन्धने' ३३) क्षिया। ('तारा ज्योतिषि' ३४) ('धारा प्रपातने' ३५) रेखा चूडा पीडा वपा वसा मृजा। 'क्रपेः संप्रसारणं च' ३६। कृपा। इति भिदादिः।।

(वा०) क्रपेः संप्रसारणं च।

१०५. चिन्तिपूजिकथिकुम्बिचर्चश्च

१०६. आतश्चोपसर्गे

१०७. ण्यासश्रन्थो युच्

(वा०) घट्टिवन्दिविदिभ्यश्चेति वाच्यम्।

(वा०) इषेरनिच्छार्थस्य।

(वा०) परेर्वा।

१०८. रोगाख्यायां ण्वुल्व[1]हुलम्

(वा०) धात्वर्थनिर्देशे ण्वुल् ।

(वा०) इक्श्तिपौ धातुनिर्देशे ।

(वा०) वर्णात्कारः।

(वा०) रादिफः।

(वा०) मत्वर्थाच्छः।

(वा०) इणजादिभ्यः।

(वा०) इञ् वपादिभ्यः।

(वा०)इत्कृष्यादिभ्यः।

(वा०) संपदादिभ्यः क्विप् ।

४३. (वा. २२३३)। संपद् विपद् आपद् प्रतिपद् परिषद्–एते संपदादयः।।

१०९. संज्ञायाम्

११०. विभाषाख्यानपरिप्रश्नयोरिञ्च

१११. पर्यायार्हणोत्पत्तिषु ण्वुच्

११२. आक्रोशे नञ्यनिः

११३. कृत्यल्युटो बहुलम्

११४. नंपुसके भावे[2] क्तः

११५. ल्युट्[3] च

११६. कर्मणि च येन संस्पर्शात्कर्तुः शरीरसुखम्

११७. करणाधिकरणयोश्च[4]

११८. पुंसि संज्ञायां घः[5]प्रायेण

११९. गोचरसंचरवहव्रजव्यजापण-निगमाश्च

१२०. अवे तृ–स्त्रोर्घञ्[6]

१२१. हलश्च

(वा०) घञ्विधाववहाराधारावाया-नामुपसंख्यानम्।

१२२. अध्यायन्यायोद्यावसंहाराश्च

१२३. उदङ्कोऽनुदके

१२४. जालमानायः

---

**विमर्श**

१-इस सूत्र से 'ण्वुल्' की अनुवृत्ति ३।३।११०। तक जाती है। २-इस सूत्र से 'नपुंसके भावे' की अनुवृत्ति ३।३।११६। तक जायेगी। ३-'ल्युट्' की अनुवृत्ति ३।३।११७। तक जायेगी। ४-यहाँ से 'करणाधिकरणयोः' की अनुवृत्ति ३।३।१२५। तक जायेगी। ५-इस सूत्र से 'घः' की अनुवृत्ति ३।३।११९। तक तथा 'पुंसि संज्ञायां' की अनुवृत्ति ३।३।१२५। तक एवं 'प्रायेण' की ३।३।१२१। तक जाती है। ३।३।११९। में 'प्रायेण' सम्बन्धित नहीं होता है। ६-'घञ्' की अनुवृत्ति ३।३।१२५। तक जाती है।

१२५. खनो घ च
(वा०) खनेर्डडरेकेकबका वाच्याः।
१२६. ईषद्-दुः-सुषु कृच्छ्राकृ-च्छ्रार्थेषु खल्[१]
१२७. कर्तृकर्मणोश्च भूकृञोः
(वा०) कर्तृकर्मणोश्च्व्यर्थयोरिति वाच्यम्।
१२८. आतो युच्[२]
१२९. छन्दसि[३] गत्यर्थेभ्यः
१३०. अन्येभ्योऽपि दृश्यते
(वा०) भाषायां शासियुधिदृशि-धृषिमृषिभ्यो युज्वाच्यः।
१३१. वर्तमानसामीप्ये वर्तमानवद्वा[४]
१३२. आशंसायां[५] भूतवच्च
१३३. क्षिप्रवचने लृट्
१३४. आशंसावचने लिङ्
१३५. नानद्यतनव[६]त्क्रियाप्रबन्ध-सामीप्ययोः
१३६. भविष्यति मर्यादावचने-ऽवरस्मिन्[७]
१३७. कालविभागे चानहोरात्राणाम्[८]
१३८. परस्मिन्विभाषा
१३९. लिङ्निमित्ते लृङ् क्रियातिपत्तौ[९]
१४०. भूते[१०]च
१४१. वोताप्योः[११]
१४१. गर्हायां लड[१२]पिजात्वोः
१४३. विभाषा कथमि लिङ् च
१४४. किंवृत्ते लिङ्लृटौ[१३]
१४५. अनवक्लृप्त्यमर्षयोर[१४]किंवृत्ते-ऽपि
१४६. किंकिलास्त्यर्थेषु लृट्
१४७. जातुयदोर्लिङ्[१५]
(वा०) यदायद्योरुपसंख्यानम्।
१४८. यच्चयत्रयोः[१६]

---

**विमर्श**

१-यहाँ से 'ईषद्दुःसुषु कृच्छाकृच्छ्रार्थेषु' की अनुवृत्ति ३।३।१३०। तक तथा 'खल्' की अनुवृत्ति ३।३।१२७। तक जायेगी। २-'युच्' की अनुवृत्ति ३।३।१३०। तक जाती है। ३-'छन्दसि' की भी अनुवृत्ति ३।३।१३०। तक जाती है। ४-इस सूत्र से 'वर्तमानवद्वा' की अनुवृत्ति ३।३।१३२। तक जायेगी। ५-'आशंसायाम्' की अनुवृत्ति ३।३।१३३। तक जाती है। ६-'नानद्यतनवत्' की अनुवृत्ति ३।३।१३८। तक जाती है। ७-यहाँ से ' भविष्यति ' की अनुवृत्ति ३।३।१३९। तक, 'मर्यादावचने' की ३।३।१३८। तक एवं 'अवरस्मिन्' की ३।३।१३७। तक जायेगी। ८-इस समस्त सूत्र की अनुवृत्ति ३।३।१३८। तक जाती है। ९-इस निखिल सूत्र की अनुवृत्ति ३।३।१४१। तक जायेगी। १०-'भूते' की अनुवृत्ति ३।३।१४१। तक जाती है। ११-'उताप्योः समर्थयोर्लिङ्' (३।३।१५२।) सूत्र से पूर्व तक विकल्प से लृङ् प्रत्यय का विधान होता है अर्थात् इस सूत्र का अधिकार ३।३।१५१। तक जाता है। 'वा+आ' को सवर्ण दीर्घ होकर 'वा' बना पुनः वा+उताप्योः यहाँ आद् गुणः (६।१।८४।) लगकर वोताप्योः बना है। यहाँ पर आङ् मर्यादा में है, अभिविधि में नहीं। १२-यहाँ से 'गर्हायाम्' की अनुवृत्ति ३।३।१४४।, तथा 'लट्' की अनुवृत्ति ३।३।१४३। तक जायेगी। १३-'लिङ्लृटौ' की अनुवृत्ति ३।३।१४५। तक जाती है। १४-यहाँ से 'अनवक्लृप्त्यमर्षयोः' की अनुवृत्ति ३।३।१४८। तक जायेगी। १५-'लिङ्' की अनुवृत्ति ३।३।१५०। तक जाती है। १६-इस समस्त सूत्र की अनुवृत्ति ३।३।१५०। तक जाती है।

१४९. गर्हायां च
१५०. चित्रीकरणे[1] च
१५१. शेषे लृडयदौ
१५२. उताप्योः समर्थयोर्लिङ्[2]
१५३. कामप्रवेदनेऽकच्चिति
१५४. संभावनेऽलमिति चेत्सिद्धाप्रयोगे[3]
१५५. विभाषा[4]धातौ संभावनवचनेऽयदि
१५६. हेतुहेतुमतोर्लिङ्
१५७. इच्छार्थेषु[5]लिङ्लोटौ
(वा०) कामप्रवेदन इति वक्तव्यम्।
१५८. समानकर्तृकेषु[6] तुमुन्
१५९. लिङ्[7]च
१६०. इच्छार्थेभ्यो विभाषा वर्तमाने
१६१. विधिनिमन्त्रणामन्त्रणाधीष्टसंप्रश्नप्रार्थनेषु[8]लिङ्
१६२. लोट्[9]च
१६३. प्रैषातिसर्गप्राप्तकालेषु[10]कृत्याश्च
१६४. लिङ् चोर्ध्वमौहूर्तिके[11]
१६५. स्मे लोट्[12]
१६६. अधीष्टे च
१६७. कालसमयवेलासु[13]तुमुन्
१६८. लिङ्यदि[14]
१६९. अर्हे कृत्यतृचश्च
१७०. आवश्यकाधमर्ण्ययो[15]र्णिनिः
१७१. कृत्याश्च[16]
१७२. शकि लिङ् च
१७३. आशिषि[17] लिङ्लोटौ
१७४. क्तिच् क्तौ च संज्ञायाम्
१७५. माङि लुङ्[18]
१७६. स्मोत्तरे लङ् च
(उणादय इङो निवासवय-धजपोरपघन इच्छा हलश्च वोताप्यो-र्विधिषोडश।)

इति पाणिनीयसूत्रपाठे तृतीयस्याध्यायस्य तृतीयः पादः।



**विमर्श**

१-'चित्रीकरणे' की अनुवृत्ति ३।३।१५१। तक जायेगी। २-इस सूत्र से 'लिङ्' की अनुवृत्ति ३।३।१५५। तक जाती है। ३-इस निखिल सूत्र की अनुवृत्ति ३।३।१५५। तक जायेगी। ४-'विभाषा' की अनुवृत्ति ३।३।१५६। तक जाती है। ५-'इच्छार्थेषु' की अनुवृत्ति ३।३।१५९। तक जाती है। ६-यहाँ से 'समानकर्तृकेषु' की भी अनुवृत्ति ३।३।१५९। तक जायेगी। ७-'लिङ्' की अनुवृत्ति ३।३।१६०। तक जायेगी। ८-'विधिनिमन्त्रणामन्त्रणाधीष्टसंप्रश्नप्रार्थनेषु' की अनुवृत्ति ३।३।१६२। तक जायेगी। ९. 'लोट्' की अनुवृत्ति ३।३।१६३। तक जायेगी। १०-'प्रैषातिसर्गप्राप्तकालेषु' की अनुवृत्ति ३।३।१६५। तक जाती है। ११-यहाँ से 'ऊर्ध्वमौहूर्तिके' की अनुवृत्ति ३।३।१६५। तक जाती है। १२- इस समस्त सूत्र की अनुवृत्ति ३।३।१६६। तक जाती है। १३-यहाँ से 'कालसमयवेलासु' की अनुवृत्ति ३।३।१६८। तक जायेगी। १४-यहाँ से 'लिङ्' की अनुवृत्ति ३।३।१६९। तक जायेगी। १५-इस सूत्र से 'आवश्यकाधमर्ण्ययोः' की अनुवत्ति ३।३।१७१। तक जायेगी। १६-'कृत्याः' की अनुवृत्ति ३।३।१७२। तक जायेगी। १७-यहाँ से 'आशिषि' की अनुवृत्ति ३।३।१७५। तक जाती है। १८-इस निखिल सूत्र की अनुवृत्ति ३।३।१७६। तक जायेगी।

